श्रीश्रीगुरुगौराङ्गौ जयतः ।

# श्रीस्तवकल्पद्रुमः ।

संगृहीतारौ

कलियुगपावन-स्वभजन-विभजन-प्रयोजनावतार-
श्रीभगवत्कृष्णचैतन्यमहाप्रभोः परंपरायां नवमस्य
विश्वव्यापिश्रीचैतन्यश्रीगौडीयमठप्रतिष्ठातुः
श्रीगौडीयसंप्रदायैकसंरक्षकप्रवरस्य
नित्यलीलायां प्रविष्टस्य श्रीरूपानुगवरजगद्गुरोः
ॐ विष्णुपाद-परमहंस-१०८श्री-
श्रीमद्भक्तिसिद्धान्तसरस्वतीगोस्वामिप्रभुपादस्य

शिष्यः

लन्दनादिविदेशेषु गौडीयमिशनस्य भक्तिसिद्धान्तप्रचारकः
गौडीयसंघसंस्थापकः सभापतिश्च
श्रीमन्नित्यानन्दवंशावतंसः
परमहंस-परिव्राजकाचार्यवर्यः
श्रीमद्भक्तिसारङ्गगोस्वामिमहाराजः,

सतीर्थः श्रीपुरुषोत्तमदासश्च ।

प्रकाशकः-

त्रिदण्डिभिक्षुभक्तिसौरभसारः,
इमलीतला श्रीमन्महाप्रभुमन्दिर,
वृन्दावन ( मथुरा ) उ. प्र.

श्रीजगन्नाथदेवस्य स्नानयात्रातिथिः, शनिवासरः

| | | |
|---|---|---|
| गौराङ्गाब्दः | ४७४, | २९ त्रिविक्रम |
| शालिवाहनशकाब्दः | १८८१, | ज्येष्ठपूर्णिमा |
| विक्रमाब्दः | २०१६, | ज्येष्ठपूर्णिमा |
| वङ्गाब्दः | १३६६, | ५ आषाढ |
| भारतीयशकाब्दः | १८८१, | ३० ज्येष्ठ |
| खिस्ताब्दः | १९५९, | २० जून |




प्राप्तिस्थानम्—

श्रीपुरुषोत्तमदास,

गिरिधारी कुञ्ज, १८, गोपीनाथ बाग,

वृन्दावन ( मथुरा ) उ. प्र.

मुद्रकः

श्रीगोविन्दप्रसाद अग्रवाल,

हीरालाल प्रिंटिंग वर्क्स,

डीग दरवाजा, मथुरा, उ. प्र.

मूल्यम् ७) रूप्यकसप्तकम् ।

श्रीश्रीगुरुगौराङ्गौ जयतः ।

## प्रकाशकीयं वक्तव्यम् ।

हेलोद्धूलितखेदया विशदया प्रोन्मीलदामोदया
शाम्यच्छास्त्रविवादया रसदया चित्तार्पितोन्मादया ।
शश्वद्भक्तिविनोदया समदया माधुर्यमर्यादया
श्रीचैतन्य दयानिधे तव दया भूयादमन्दोदया ॥

श्रीगुरुगौराङ्गयोरमन्दोदयया दयया जगति सर्वेषां श्रीभगवद्भक्तानां वाञ्छापूरणाय प्रकाशितोऽद्य एषः "श्रीस्तवकल्पद्रुमः"

वैष्णवसमाजे तु अप्रतिमस्यास्य ग्रन्थरत्नस्य परिचयप्रदानमनावश्यकमेव, यदत्रसंगृहीतवस्तुनः श्रैष्ठ्यं सर्वैरपि सर्वत्र सगौरवं स्वीकृतमेव । अस्मिन् ग्रन्थे च संगृहीतं भगवतो नाम-रूप-गुण-लीला-रस-भाव-प्रेम-भक्तिसिद्धान्तादीनां सर्वेषामेव ज्ञातव्यविषयाणां प्रायशः पूर्णरूपेण वर्णनम् । गूढभक्तिसिद्धान्तमाधुर्यास्वादचतुरैरस्यानुशीलनमहर्निशं कर्तव्यमेव, नात्र कस्यापि विसंवादः । वैष्णवास्त्वेतस्मात् प्रेमानन्दोन्मादं प्राप्स्यन्ति अतः स्वहृदये निधिमिव स्थापयिष्यन्ति

च नात्राणुमात्रोऽपि सन्देहः । अत एवाऽहमपि एतादृशमहार्घतापरिपूर्णदुर्दिनेऽपि ग्रन्थरत्नमेनं प्रकाशयितुं बद्धपरिकरः ।

अपरं च देवनागराक्षरे सर्वतः प्रथमं मुद्रितेनानेन संस्करणेन सर्वेषामेव शुद्धभजनपरिपाटीजिज्ञासूनां भक्तिरसपिपासूनामितरविषयरसपिपासापहरणपूर्वकं शुद्धप्रेमरसपिपासावर्धितैव । अत एव देशविदेशेषु प्रचारोऽस्यावश्यं भविता ।

अथ च कलियुगपावन-स्वभजन-विभजन-प्रयोजनावतार-श्रीगौराङ्गमहाप्रभोश्चरितशिक्षा, श्रीराधाकृष्ण-नाम-रूप-गुण-लीला-रसमाधुरी, श्रीवृन्दावनधामवैशिष्ट्यमित्यादीनामनेकेषां विषयाणां प्रतिपादनमत्र सरलतया सर्वैरपि लप्स्यते ।

ये च श्रीहरिस्मरणभजनानुशीलनमेव जीवनं मन्यन्ते तैस्त्वेतस्य प्रतिदिनं पाठः कर्तव्य एव । एतस्यानुशीलनं हि सहृदयपाठकानां हृदि स्वेष्टदेवस्य नाम-रूप-गुण-लीलामाधुरी-स्मृतिपूर्वकमपूर्वामानन्दलहरीं प्रकटीकरिष्यति ।

संगृहीतृभ्यां एतादृशमप्राकृतं परमललितं साहित्यं प्रकटयद्भ्यां सर्वेभ्यः सज्जितेभ्यो विचित्रमेव प्रसादपरिवेषणं कृतम् । एतं श्रीस्तवकल्पद्रुमं लोकद्वयसुहृदं सुहृदमिवाश्रित्य प्रचुरं प्रमोदं प्राप्स्यन्ति । एतस्य सुशीतलच्छायायामासीनाः संसारसन्तापरहिता अप्राकृतराज्यसुखानुभवं करिष्यन्ति । अन्यच्च कलिहतमरुभूमावपि उभयलोककल्याणभाजनस्य

जननन्दनगुणनन्दितसभाजनस्य सकलजनसन्तापहारिणो भवाप-हारिणः प्रतिमारहितस्यास्य श्रीस्तवकल्पद्रुमस्यारोपयितारौ संगृहीतारौ सर्वेभ्यः कल्याणफलं प्रदातारौ, कैः शब्दैः संभाव्येतां नाम । यतो हि कस्यामपि भाषायां नैतादृशं विस्तृतं सुन्दरं संस्करणं मुद्रितमद्यावधि इति हि नैषा अत्युक्तिः ।

अस्मिन् ग्रन्थे च वेद-पुराण-तंत्र-संहिता-चंपू-इतिहास-बिरुद-तापनी-काव्य-नाटक--पञ्चरात्र--सन्दर्भ--भागवतप्रभृतिग्रन्थेभ्यः संगृहीतानि मङ्गलाचरणस्तोत्राणि, श्रीगौराङ्गमहाप्रभुस्तोत्राणि, श्रीकृष्णस्तोत्राणि, श्रीराधास्तोत्राणि, श्रीराधाकृष्णस्तोत्राणि, संकीर्णस्तोत्राणि च सन्ति । श्रीमद्भागवततः समस्तान्यपि श्रीकृष्णस्तोत्राणि संगृहीतानि । अथ च श्रीरूपगोस्वामिकृता "स्तवमाला", श्रीरघुनाथदासगोस्वामिकृता "स्तवावली", श्रीविश्वनाथचक्रवर्तिकृता "स्तवामृतलहरी" च संपूर्णैव संगृहीता । अपि च गौराङ्ग-गोविन्द-गोपाल-कृष्ण-निकुंजकेलि-बिरुदावल्यः संगृहीताः । श्रीजयदेवगोस्वामि-श्रीबिल्वमङ्गलठक्कुर-श्रीयामुनाचार्य-श्रीकुलशेखर-श्रीवृन्दावनदासठक्कुर-श्रीप्रबोधानन्द-सरस्वती--श्रीसनातनगोस्वामि--श्रीजीवगोस्वामि--श्रीसार्वभौम-भट्टाचार्य-श्रीकविकर्णपूर-श्रीकृष्णदासकविराज-श्रीनरहरिसरकार-श्रीश्रीनिवासाचार्य--श्रीभक्तिविनोदठक्कुर--इत्यादि--महानुभाव-रचितानि परःशतानि स्तोत्राणि संगृहीतानि । कतिचन स्तोत्राणि अज्ञातकर्तृकाण्यपि संगृहीतानि सन्ति ।

मूलसंशोधनं चाऽस्य महति लोककल्याणकार्ये व्यस्तेनाऽपि अमूल्यं स्वसमयं दत्त्वा "श्रीकृष्णानन्दाश्रम"-संस्थापकेन, कैमारवन-श्रीवृन्दावनस्थेन, काव्यवेदान्ततीर्थेन, महाकविना श्रीवनमालिदासशास्त्रिणा कृतं, "प्रूफ"संशोधनं तु काव्य-व्याकरणपुराणभक्तितीर्थेन पण्डितश्रीरवीन्द्रनाथवन्द्योपाध्यायेन भागवतभूषणेन वृन्दावनस्थ श्रीभक्तिविद्यालयप्राध्यापकेन श्रीगोपीश्वरसमीपवर्तिना कृतम् । एतयोर्द्वयोरपि संशोधक-महानुभावयोरङ्गीकृतकार्यपालनदृढव्रतिता अतुलनीया एव-मादर्शस्थानीया चिरस्मरणीया च । अत एतौ सर्वेषां धन्यवादार्हौ वयं त्वेतयोरुपकारभारं नतेन मूर्ध्ना सादरं धारयामः ।

निम्नलिखितस्थानेभ्य एवं महानुभावेभ्योऽपि संग्रहकाले अनेकग्रन्थसाहाय्यं लब्धमतस्तेषामपि कृतज्ञता अस्माभिर्न स्मृतिपथाद् विस्मर्तव्या । तेषां नामानि यथाः—"श्रीवैष्णव-पारमार्थिकविश्वविद्यालय",रमणरेती, वृन्दावन, "श्रीराधारमण-लायब्रेरी", गोविन्दकुण्ड, वृन्दावन, "श्रीकृष्णदासबाबाजी" (कुसुमसरोवरवाले), मथुरा, "श्रीयमुनावल्लभशरणगोस्वामी," जयदेवपीठ, कालियदह, वृन्दावन ।

"हीरालालप्रिंटिंगवर्क्स"ध्यक्षः श्रीगोविन्दप्रसादअग्रवाल-महोदयोऽपि भृशं धन्यवादार्हः, यदेतस्य सौजन्येन शीघ्रतया सुष्ठुतया च ग्रन्थरत्नस्यास्य मुद्रणं सम्भूत् ।

कृपामयप्रियपाठकगणचरणयोः सादरं प्रार्थनेयं यदतिशीघ्रतया मुद्रापणेन शीशकाक्षरसंयोजकव्यापारेण दृष्टिदोषप्रमादाद्वा त्रुटिविच्युतयो भवेयुस्ताः सर्वा अपि संमर्ष्य संशोध्यानुगृहीतव्योऽयम्

इमलीतला श्रीमन्महाप्रभुमन्दिर<br>
वृन्दावन ( मथुरा ) उ. प्र.<br>
गौराङ्गाब्दः ४७४, २९ त्रिविक्रम<br>
ख्रिस्ताब्दः १९५९, २० जून

वैष्णवदासानुदासः—<br>
त्रिदण्डिभिक्षुभक्तिसौरभसारः

## श्रीस्तवकल्पद्रुमधृतप्रमाणग्रन्थानां

## मातृकानुक्रमिकसूचिका ।

अर्थरत्नाल्पदीपिका
अलङ्कारकौस्तुभः
आदिपुराणम्
आनन्दवृन्दावनचम्पूः
उज्ज्वलनीलमणिः
उपदेशामृतम्
ऊर्ध्वाम्नायतंत्रम्
ऋग्वेदः
ऐश्वर्यकादम्बिनी
कृष्णकर्णामृतम्
कृष्णचैतन्यचरितामृतम्
कृष्णनामाष्टकम्
कृष्णबिरुदावली
कृष्णभजनामृतम्
कृष्णभावनामृतम्
कृष्णलीलास्तवः
गर्गसंहिता
गीतगोविन्दम्
गीतचन्द्रोदयः
गोद्रुमचन्द्रभजनोपदेशः
गोपालचम्पूः
गोपालतापनी
गोपालबिरुदावली
गोविन्ददामोदरस्तोत्रम्
गोविन्दबिरुदावली
गोविन्दभाष्यपीठकम्
गोविन्दलीलामृतम्
गौतमीयतंत्रम्
गौरकृष्णोदयः
गौरगोविन्दलीलामृतम्
गौरप्रेमस्तवराजः
गौरप्रेमोल्लासस्तोत्रम्
गौराङ्गचम्पूः
गौराङ्गबिरुदावली

गौराङ्गलीलामृतम्
गौराङ्गलीलास्मरणमङ्गलस्तोत्रम्
ग्रन्थरत्ननवकम्
ग्रन्थरत्नपञ्चकम्
चमत्कारचन्द्रिका
चैतन्यचन्द्रामृतम्
चैतन्यचन्द्रोदयः
चैतन्यचरितामृतम्
चैतन्यचरितामृतमहाकाव्यम्
चैतन्यभागवतम्
चैतन्यमतमंजूषा
दशश्लोकीभाष्यम्
नाममाधुरी
नाममाहात्म्यम्
नारदपञ्चरात्रम्
निकुञ्जकेलिबिरुदावली
निकुञ्जरहस्यस्तवः
नित्यानन्दचरितामृतम्
पद्मपुराणम्
पद्यावली
परतत्त्वगौरः
प्रपन्नगीतास्तोत्रम्

प्रपन्नजीवनामृतम्
प्रेमपत्तनम्
बृहन्नारदीयपुराणम्
बृहद्भागवतामृतम्
बृहद्वैष्णवतोषणी
ब्रह्मसंहिता
ब्रह्माण्डपुराणम्
भक्तिग्रन्थावली
भक्तिचन्द्रिका
भक्तिरत्नाकरः
भक्तिरसामृतसिन्धुः
भगवन्नामकौमुदी
भगवन्नाममहिमा
भगवन्नाममाहात्म्यसंग्रहः
भागवतसन्दर्भः
मधुकेलिवल्ली
मनःशिक्षा
महाभारतम्
माधवमहोत्सवः
माधुर्यकादम्बिनी
मुकुन्दमालास्तोत्रम्
मुक्ताचरितम्

मोक्षार्णवतंत्रम्
राधाकृष्णस्तोत्रम्
राधारसमञ्जरी
राधारससुधानिधिः
लघुभागवतम्
ललितमाधवम्
विदग्धमाधवम्
वृन्दावनमहिमामृतम्
शिक्षाष्टकम्
श्रीमद्भगवद्गीता
श्रीमद्भागवतम्
संक्षेपभागवतामृतटीप्पणी
संक्षेपवैष्णवतोषणी
संगीतमाधवम्
सज्जनतोषणी
सख्यसुधाकरः
सनत्कुमारसंहिता
सहस्रनामत्रयम्

साधककण्ठहारः
सारार्थदर्शिनी
सारार्थवर्षिणी
सुखवर्तनी
सुबोधिनी
स्कन्दपुराणम्
स्तवपुष्पाञ्जली
स्तवमाला
स्तवामृतबिन्दुः
स्तवामृतलहरी
स्तवावली
स्तोत्रमाला
स्तोत्ररत्नावली
स्वनियमदशकम्
स्वनियमद्वादशकम्
स्वप्नविलासामृतम्
स्वरूपगोस्वामीकडचा
हरिभक्तिविलासः

श्रीश्रीगुरुगौराङ्गौ जयतः ।

# श्रीस्तवकल्पद्रुमस्य विषयानुक्रमणिका ।

| विषयः | | | श्लोकसमष्टिः | पृष्ठाङ्कः |
|---|---|---|---|---|

| विषयः | | श्लोकसमष्टिः | पृष्ठाङ्कः |
|---|---|---|---|

अस्मदीय-श्रीगुरुदेव-

नित्यलीलाप्रविष्ट-

ॐ विष्णुपाद-परमहंस-१०८श्री-

श्रीमद्भक्तिसिद्धान्तसरस्वतीगोस्वामि-

प्रभुपादानां

करकमलेषु

सर्मपितमस्तु ।

नामश्रेष्ठं मनुमपि शचीपुत्रमत्र स्वरूपं
रूपं तस्याग्रजमुरुपुरीं माथुरीं गोष्ठवाटीम् ।
राधाकुण्डं गिरिवरमहो राधिकामाधवाशां
प्राप्तो यस्य प्रथितकृपया श्रीगुरुं तं नतोऽस्मि ॥

कलियुगपावन-स्वभजन-विभजन-प्रयोजनावतार-
श्रीभगवत्कृष्णचैतन्यमहाप्रभुपरंपरायां नवमाः
श्रीगौड़ीयसंप्रदायैकसंरक्षकप्रवराः
नित्यलीलाप्रविष्टाः ॐ विष्णुपाद-परमहंस-१०८ श्री-
श्रीमद्भक्तिसिद्धान्तसरस्वतीगोस्वामिप्रभुपादाः ।

श्रीश्रीगुरुगौराङ्गौ जयतः ।

# श्रीस्तवकल्पद्रुमः ।

## मङ्गलाचरणम् ।

वन्देऽहं श्रीगुरोः श्रीयुतपदकमलं श्रीगुरून् वैष्णवांश्च
श्रीरूपं साग्रजातं सहगण-रघुनाथान्वितं तं सजीवम् ।
साद्वैतं सावधूतं परिजनसहितं कृष्णचैतन्यदेवं
श्रीराधाकृष्णपादान् सहगण-ललिताश्रीविशाखान्वितांश्च ॥१॥

नमः ॐ विष्णुपादाय कृष्णप्रेष्ठाय भूतले ।
श्रीमते भक्तिसिद्धान्त - सरस्वतीतिनामिने ॥
श्रीवार्षभानवीदेवीदयिताय कृपाब्धये ।
कृष्णसम्बन्धविज्ञानदायिने प्रभवे नमः ॥
माधुर्योज्ज्वलप्रेमाढ्य - श्रीरूपानुगभक्तिद ।
श्रीगौरकरुणाशक्तिविग्रहाय नमोऽस्तु ते ॥
नमस्ते गौरवाणीश्रीमूर्तये दीनतारिणे ।
रूपानुगविरुद्धापसिद्धान्तध्वान्तहारिणे ॥ २ ॥

नमो गौरकिशोराय साक्षाद्वैराग्यमूर्तये ।
विप्रलंभरसांभोधे पादाम्बुजाय ते नमः ॥ ३ ॥

नमो भक्तिविनोदाय सच्चिदानन्द–नामिने ।
गौरशक्तिस्वरूपाय रूपानुगवराय ते ॥ ४ ॥

गौराविर्भावभूमेस्त्वं निर्देष्टा सज्जनप्रियः ।
वैष्णवसार्वभौम श्रीजगन्नाथाय ते नमः ॥ ५ ॥

वाञ्छाकल्पतरुभ्यश्च कृपासिन्धुभ्य एव च ।
पतितानां पावनेभ्यो वैष्णवेभ्यो नमो नमः ॥ ६ ॥

नमो महावदान्याय कृष्णप्रेमप्रदाय ते ।
कृष्णाय कृष्णचैतन्यनाम्ने गौरत्विषे नमः ॥ ७ ॥

पञ्चतत्त्वात्मकं कृष्णं भक्तरूपस्वरूपकम् ।
भक्तावतारं भक्ताख्यं नमामि भक्तशक्तिकम् ॥ ८ ॥

श्रीकृष्णचैतन्य प्रभुनित्यानन्द ।
श्रीअद्वैत गदाधर श्रीवासादिगौरभक्तवृन्द ॥ ९ ॥

हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे ।
हरे राम हरे राम राम राम हरे हरे ॥ १० ॥

हे कृष्ण करुणासिन्धो दीनबन्धो जगत्पते ।
गोपेश गोपिकाकान्त राधाकान्त नमोऽस्तु ते ॥ ११ ॥

तप्तकाञ्चनगौराङ्गि राधे वृन्दावनेश्वरि ।
वृषभानुसुते देवि प्रणमामि हरिप्रिये ॥ १२ ॥

राधाभावाभिपूर्णं व्रजरसधयनोद्भूतघूर्णं सुतूर्णं
नृत्यन्तं भक्तमध्ये निरुपममधुरे कीर्तने कृष्णनाम्नाम्।
वर्षन्तं प्रेमसिन्धुं परमकरुणयाप्लावयन्तं त्रिलोकीं
वन्दे चैतन्यदेवं परिजनसहितं चारुचामीकराभम् ॥ १३ ॥

जयतां सुरतौ पङ्गोर्मम मन्दमतेर्गती ।
मत्सर्वस्वपदांभोजौ राधामदनमोहनौ ॥ १४ ॥

दीव्यद्वृन्दारण्यकल्पद्रुमाधः
श्रीमद्रत्नागारसिंहासनस्थौ ।
श्रीमद्राधा–श्रीलगोविन्ददेवौ
प्रेष्ठालीभिः सेव्यमानौ स्मरामि ॥ १५ ॥

श्रीमान् रासरसारंभी वंशीवटतटस्थितः ।
कर्षन् वेणुस्वनैर्गोपीर्गोपीनाथः श्रियेऽस्तु नः ॥ १६ ॥

जयति निजपदाब्जप्रेमदानावतीर्णो
विविधमधुरिमाब्धिः कोऽपि कैशोरगन्धिः ।
गतपरमदशान्तं यस्य चैतन्यरूपा-
दनुभवपदमाप्तं प्रेम गोपीषु नित्यम् ॥ १७ ॥

मधुरमधुरमेतन्मङ्गलं मङ्गलानां
सकलनिगमवल्लीसत्फलं चित्स्वरूपम् ।
सकृदपि परिगीतं श्रद्धया हेलया वा
भृगुवर ! नरमात्रं तारयेत् कृष्णनाम ॥ १८ ॥

जय जय जय देव देव देव
त्रिभुवनमङ्गलदिव्यनामधेय ।
जय जय जय देव कृष्णदेव
श्रवणमनोनयनामृतावतार ॥ १९ ॥

जयति जयति नामानन्दरूपं मुरारे-
र्विरमितनिजधर्मध्यानपूजादियत्नम् ।
कथमपि सकृदात्तं मुक्तिदं प्राणिनां यत्
परमममृतमेकं जीवनं भूषणं मे ॥ २० ॥

अंहः संहरदखिलं सकृदुदयादेव सकललोकस्य ।
तरणिरिव तिमिरजलधिं जयति जगन्मङ्गलं हरेर्नाम ॥ २१ ॥

नमोऽस्तु नामरूपाय नमोऽस्तु नामजल्पिने ।
नमोऽस्तु नामशुद्धाय नमो नाममयाय च ॥ २२ ॥

## श्रीगुरुदेव-ध्यानम्

कृपा – मरन्दान्वित – पाद – पङ्कजं
श्वेताम्बरं गौररुचिं सनातनम् ।
शन्दं सुमाल्याभरणं गुणालयं
स्मरामि सद्भक्तिमयं गुरुं हरिम् ॥ १ ॥

गुरुं गौरं द्विभुजञ्च वरदं करुणेक्षणं
वृन्दावने निकुञ्जस्थं कल्पवृक्षप्रमूलकम् ।
राधामाधवयोः प्रेष्ठं विशाखादि-समन्वितं
व्रजे रामागणैर्युक्तं भजे पतितपावनम् ॥ २ ॥

शुद्धस्वर्ण – रुचिं शुद्धभाव – भूषा – कलेवरम् ।
सच्चिदानन्द – सान्द्रांगं करुणामृत – वर्षिणम् ॥ ३ ॥

शशांकायुत – संकाशं वराभय – लसत्करम् ।
शुक्लाम्बर – धरं देवं शुक्लमाल्यानुलेपनम् ॥ ४ ॥

शिष्यानुग्रह–सन्धानं स्मित – नित्य – युताननम् ।
श्रीकृष्ण – प्रेमसेवादि – दातारं दीन – पालकम् ॥ ५ ॥

समस्त – मंगलाधारं सर्वानन्दमयं विभुम् ।
ध्यायन् श्रीगुरुदेवं तं परमानन्दमश्नुते ॥ ६ ॥

गुरुं गौरं द्विनेत्रं च द्विभुजं करुणेक्षणम् ।
वराभयकरं शान्तं स्मरेत् तन्नाम–पूर्वकम् ॥ ७ ॥

श्रीगुरुं गौर – हृदयं शान्तं करुणाशालिनम् ।
वराभयकरं ध्यायेत् प्रणतजनपालकम् ॥ ८ ॥

श्वेतपद्मे समासीनं द्विनेत्रं द्विभुजं गुरुम् ।
वराभयकरं शान्तं ध्यायेदखिल – सिद्धिदम् ॥ ९ ॥

प्रातः शिरसि शुक्लेऽब्जे द्विनेत्रं द्विभुजं गुरुम् ।
प्रसन्न – वदनं शान्तं स्मरेत् तन्नाम – पूर्वकम् ॥१०॥

हृदम्बुजे कर्णिका – मध्य–संस्थं
　　सिंहासनाधः स्थितदिव्यमूर्तिम् ।
ध्यायेद् गुरुं चन्द्रकला – प्रकाशं
　　संवित्सुखाविष्ट – वर – प्रदानम् ॥११॥

**श्रीगुरुदेव-प्रणामः**

नामश्रेष्ठं मनुमपि शचीपुत्रमत्र स्वरूपं
रूपं तस्याग्रजमुरुपुरीं माथुरीं गोष्ठवाटीम् ।
राधाकुण्डं गिरिवरमहो राधिकामाधवाशां
प्राप्तो यस्य प्रथितकृपया श्रीगुरुं तं नतोऽस्मि ॥१॥

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ २ ॥

नमस्ते गुरुदेवाय सर्वसिद्धिप्रदायिने ।
सर्वमङ्गलरूपाय सर्वानन्दविधायिने ॥ ३ ॥

वन्दे श्रीगुरुदेवं तं करुणावरुणालयम् ।
यत्कृपालवलेशेन पामरोऽप्यमरायते ॥ ४ ॥

**विज्ञप्तिः**

हे श्रीगुरो ज्ञानद दीनबन्धो
स्वानन्ददातः करुणैकसिन्धो ।
वृन्दावनासीन हितावतार
प्रसीद राधाप्रणयप्रचार ॥ १ ॥

त्वं गोपिका वृषरवेस्तनयान्तिकेऽसि
सेवाधिकारिणि गुरो निजपादपद्मे ।
दास्यं प्रदाय कुरु मां व्रजकानने श्री-
राधांघ्रिसेवनरसे सुखिनीं सुखाब्धे ॥ २ ॥

त्रायस्व भो जगन्नाथ गुरो संसारवह्निना ।
दग्धं मां कालदष्टं च त्वामहं शरणं गतः ॥ ३ ॥

## श्रीगुरुरूपसखी–ध्यानम्

चिदानन्द – रसमयीं द्रुतहेम – सम – प्रभाम् ।
नीलवस्त्र – परीधानां नानालंकार – भूषिताम् ॥ १ ॥

राधिका – कृष्णयोः पार्श्ववर्तिनीं नव – यौवनाम् ।
गुरुरूपां सखीं वन्दे सान्द्रानन्द – प्रदायिनीम् ॥ २ ॥

कृपा – मरन्द – संपूर्णां शुद्धस्वर्ण – लसद्रुचिम् ।
क्षीणमध्यां पृथुश्रोणीं कस्तूरी – तिलकान्विताम् ॥ ३ ॥

तुंगस्तनीं विधुमुखीं रत्नाभरण – भूषिताम् ।
शोणान्तरीय–चित्रेन्दु–ज्योत्स्नाम्बर–विधारिणीम् ॥ ४ ॥

हरिन्मणि – चित – स्वर्णचूडिकां मधुरस्मिताम् ।
सीमन्तोपरि सद्रत्नामलकालि – लसन्मुखीम् ॥ ५ ॥

किशोरीं गोपिकां रम्यां राधिका–प्रीतिभूषणाम् ।
सुन्दरीं सुकुमारांगीं गुरुं ध्यायेत् प्रयत्नतः ॥ ६ ॥

## श्रीगुरुरूपसखी–प्रणामः

राधासंमुख - संसक्ति सखीसंग - निवासिनीम् ।
तामहं सततं वन्दे गुरुरूपां परां सखीम् ॥ १ ॥

## श्रीगौराङ्गमहाप्रभु–ध्यानम्

श्रीमन्मौक्तिकदाम-बद्धचिकुरं सुस्मेर-चन्द्राननं
श्रीखण्डागुरु-चारु-चित्र-वसनं स्रग्दिव्यभूषांचितम् ।
नृत्यावेश-रसानुमोद-मधुरं कन्दर्प-वेशोज्ज्वलं
चैतन्यं कनकद्युतिं निजजनैः संसेव्यमानं भजे ॥१॥

अमल - कमल - वक्त्रं गौरमम्भोज - नेत्रं
मधुर - मधुर - हास्यं चारु - कन्दर्प - वेशम् ।
सुर - नर - मुनि - वन्द्यं कृष्णचैतन्यचन्द्रं
दलित - नटन - शक्तिं तं भजे प्रेममूर्तिम् ॥ २ ॥

कान्तं शान्तमशेषजीवहृदयानन्दस्वरूपं परं
सर्वात्मानमनन्तमाद्यममलं विश्वाश्रयं केवलम् ।
भक्त्यानन्दरसैकविग्रहवरं भक्तैकभक्तिप्रियं
भक्तावेशधरं विभुं कमपि तं गौरं सदोपास्महे ॥ ३ ॥

द्विभुजं सुन्दरं सुस्थं वराभयकरं विभुम् ।
सुहास्यं पुण्डरीकाक्षं दधानं पीतवाससम् ॥ ४ ॥

कृष्णकृष्णेति भाषन्तं सुखदं सुमनोहरम् ।
यतिवेशधरं सौम्यं वनमाला–विभूषितम् ॥ ५ ॥

तारयन्तं जनान् सर्वान् भवाम्भोधेर्दयानिधिम् ।
गौराङ्गसुन्दरं भजे नवद्वीप – सुधाकरम् ॥ ६ ॥

तरुणादित्य–सङ्काशं हरिनामकरं परम् ।
श्वेताम्बर–धरं दिव्यं भावोन्मत्त कलेवरम् ॥ ७ ॥

द्विभुजं यज्ञसूत्राढ्यं प्रसन्न–वदनाम्बुजम् ।
तुलसी – मालिकोरस्कमूर्ध्वपुण्ड्रसुशोभितम् ॥ ८ ॥

भक्ताभीष्टप्रदं देवं भक्तसारङ्गरङ्गदम् ।
भजामि सततं गौरं भक्तरूपं हरिं स्वयम् ॥ ९ ॥

## श्रीगौराङ्गमहाप्रभु–प्रणामः

नमः श्रीगुरुकृष्णाय निरुपाधिकृपाकृते ।
यः श्रीचैतन्यरूपोऽभूत् तन्वन् प्रेमरसं कलौ ॥ १ ॥

आनन्दलीलामयविग्रहाय
हेमाभदिव्यच्छविसुन्दराय ।
तस्मै महाप्रेमरसप्रदाय
चैतन्यचन्द्राय नमो नमस्ते ॥ २ ॥

यस्यैव पादाम्बुजभक्तिलभ्यः
प्रेमाभिधानः परमः पुमर्थः ।
तस्मै जगन्मङ्गलमङ्गलाय
चैतन्यचन्द्राय नमो नमस्ते ॥ ३ ॥

नमश्चैतन्यचन्द्राय कोटिचन्द्राननत्विषे ।
प्रेमानन्दाब्धिचन्द्राय चारुचन्द्रांशुहासिने ॥ ४ ॥

नमस्त्रिकालसत्याय जगन्नाथसुताय च ।
सभृत्याय सपुत्राय सकलत्राय ते नमः ॥ ५ ॥

नमो महावदान्याय कृष्णप्रेमप्रदाय ते ।
कृष्णाय कृष्णचैतन्यनाम्ने गौरत्विषे नमः ॥ ६ ॥

विश्वंभराय गौराय चैतन्याय महात्मने ।
शचीपुत्राय मित्राय लक्ष्मीशाय नमो नमः ॥ ७ ॥

वन्दे श्रीकृष्णचैतन्यमन्तर्यामिणमीश्वरम् ।
यत्प्रेरणा हि सर्वस्य कारणस्यापि कारणम् ॥ ८ ॥

वन्दे श्रीकृष्णचैतन्यं प्राणसर्वस्वमीश्वरम् ।
सर्वावतारकारुण्यनिःसीमकरुणं प्रभुम् ॥ ९ ॥

वन्दे श्रीकृष्णचैतन्यं भगवन्तं कृपार्णवम् ।
प्रेमभक्तिवितानार्थं गौडेष्ववततार यः ॥ १०॥

जयति जयति देवः श्रीशचीगर्भजन्मा
　　जयति जयति भक्तिप्रेमदानैकधर्मा ।
जयति जयति मेरुस्पर्धिगौराङ्गधामा
　　जयति जयति धन्यः कृष्णचैतन्यनामा ॥ ११॥

कृष्णं कृष्णपरिष्वङ्गसतृष्णं गौरसुन्दरम् ।
धन्यं कीर्तिसुतानन्यमन्यं चैतन्यमाश्रये ॥ १२ ॥

यस्य श्रीमन्नामपीयूषवर्षैरासीद्विश्वं
　　धूतपापं किलैतत् ।
स्वाविर्भावोल्लासितानन्दसिन्धुर्जीयात्
　　स श्रीकृष्णचैतन्यचन्द्रः ॥ १३॥

कृष्णवर्णं त्विषाऽकृष्णं साङ्गोपाङ्गास्त्रपार्षदम् ।
यज्ञैः संकीर्तनप्रायैर्भजामि कलिपावनम् ॥ १४॥

## विज्ञप्तिः

श्रीमन्नवद्वीपकिशोरचन्द्र
　　हा नाथ विश्वंभर नागरेन्द्र ।
हा श्रीशचीनन्दन चित्तचौर
　　प्रसीद हे विष्णुप्रियेश गौर ॥ १ ॥

अद्वैतप्रकटीकृतो नरहरिप्रेष्ठः स्वरूपप्रियो
　नित्यानन्दसखः सनातनगतिः श्रीरूपहृत्केतनः ।
लक्ष्मीप्राणपतिर्गदाधररसोल्लासी जगन्नाथभूः
　सांगोपांगसपार्षदः स दयतां देवः शचीनन्दनः ॥ २ ॥

चैतन्येति दयामयेति परमोदारेति नानाविध-
प्रेमावेशितसर्वभूतहृदयेऽत्याश्चर्यधामन्निति ।
गौरांगेति गुणार्णवेति रसरूपेति स्वनामप्रिये-
त्यश्रान्तं मम जल्पतो जनिरियं यायादिति प्रार्थये ॥ ३ ॥

हा हन्त चित्तभुवि मे परमोषरायां
सद्भक्तिकल्पलतिकांकुरिता कथं स्यात् ।
हृद्येकमेव परमाश्वसनीयमस्ति
चैतन्यनाम कलयन्न कदापि शोच्यः ॥ ४ ॥

कृष्णोत्कीर्तनगाननर्तनकलापाथोजनि भ्राजिता
सद्भक्तावलि-हंस-चक्र-मधुपश्रेणी-विहारास्पदम् ।
कर्णानन्दिकलध्वनिर्वहतु मे जिह्वामरुप्रांगणे
श्रीचैतन्यदयानिधे तव लसल्लीलासुधास्वधुनी ॥ ५ ॥

राधाङ्गशश्वदुपगूहनतस्तदाप्त-
धर्मद्वयेन तनुचित्तधृतेन देवः ।
गौरो दयानिधिरभूदयि नन्दसूनो
तन्मे मनोरथलतां सफलीकुरु त्वम् ॥ ६ ॥

हा गौराङ्ग दयानिधे गुणनिधे हा प्रेमसंपन्निधे
हा सौन्दर्यनिधे क्षमाजलनिधे वात्सल्यवारां निधे ।
हे गांभीर्यनिधे सुधैर्यजलधे हे भक्तवाञ्छानिधे
दीनोद्धारपरावतार भगवन् दीने मयि प्रीयताम् ॥७॥

लोकं गोप्यं स्वमधुररसं स्वादयन् योऽवतीर्णो
धन्ये गौडे व्रजपतिसुतः कृष्णचैतन्यनामा ।
आचाण्डालात् सकलजगति प्रेमभक्तेः प्रदाता
कारुण्याब्धिर्वसतु हृदि स श्रीशचीनन्दनो मे ॥ ८ ॥

कुकलिपावननाममहायशो-
द्भुतरविच्छविनाशितहृत्तमाः ।
स्वकरुणावरुणालयतामसौ
प्रकटितां कुरुतां मम मानसे ॥ ९ ॥

कलिमलस्य हरः स्मृतिमात्रकः
प्रणयभक्तिकदानघनाघनः ।
स कलिदूषितमानसमानसे
हरिरतेरुदयं सदयं क्रियात् ॥१० ॥

संसारदुःखजलधौ पतितस्य काम-
क्रोधादिनक्रमकरैः कवलीकृतस्य ।
दुर्वासना - निगडितस्य निराश्रयस्य
चैतन्यचन्द्र मम देहि पदावलम्बम् ॥ ११॥

अनर्पितचरीं चिरात् करुणयावतीर्णः कलौ
समर्पयितुमुन्नतोज्ज्वलरसां स्वभक्तिश्रियम् ।
हरिः पुरटसुन्दरद्युतिकदम्बसन्दीपितः
सदा हृदयकन्दरे स्फुरतु वः शचीनन्दनः ॥ १२॥

चैतन्यचन्द्र मम हृत्कुमुदं विकाश्य
हृद्यं विधेहि निज-चिन्तन-भृङ्गरङ्गैः ।
किञ्चापराध-तिमिरं निबिडं विधूय
पादामृतं सदय पायय दुर्गतं माम् ॥ १३॥

यत्कारुण्यं शुचिरस-चमत्कार-वारांनिधींस्ता-
न्नृभ्यो राधा-गिरिवरभृतोः स्पर्शयेत्तर्षयेन्नः ।
तस्यैवैकं पृषतमचिराल्लब्धुमाशाक्षिदानैः
सोऽव्यान्मृत्योर्दर्शनविततेः कृष्ण-चैतन्यरूपः ॥ १४॥

## श्रीनित्यानन्दप्रभु–ध्यानम्

ईषदारुण्यस्वर्णाभं नानालङ्कारभूषितं
हारिणं मालिनं दिव्योपवीतं प्रेमवर्षिणम् ।
आघूर्णितलोचनं च नीलाम्बरधरं प्रभुं
प्रेमदं परमानन्दं नित्यानन्दं स्मराम्यहम् ॥ १ ॥

शुद्धस्वर्ण-विडम्बि-सुन्दरतनुं रत्नादि-भूषाञ्चितं
प्रेमोन्मत्त-गजेन्द्र-विक्रम-लसत्-प्रेमाश्रु-धाराकुलम् ।
शुक्लं सूक्ष्मनवाम्बरादि दधतं संकीर्तनैकप्रियं
नित्यानन्दमहं भजे सकरुणं प्रेमार्णवं सुन्दरम् ॥ २ ॥

विद्युद्दाम–मदाभिमर्दन–रुचिं विस्तीर्ण–वक्षःस्थलं
प्रेमोद्घूर्णित-लोचनाञ्चल-लसत्–स्मेराभिरम्याननम् ।
नानाभूषणभूषितं सुमधुरं बिभ्रद्घनाभाम्बरं
सर्वानन्दकरं परं प्रवरनित्यानन्दचन्द्रं भजे ॥ ३ ॥

मत्तेभेन्द्र–विनिन्दि–सुन्दरगतिं–श्रीपादमिन्दीवर–
श्रेणी-श्याम-सदम्बरं तनुरुचा सान्ध्येन्दु-सन्मर्दकम् ।
प्रेमोद्घूर्ण–सुकञ्ज–खञ्जन–मदाजिन्नेत्र–हास्याननं
नित्यानन्दमहं स्मरामि सततं भूषोज्ज्वलाङ्गश्रियम् ॥ ४ ॥

## श्रीनित्यानन्दप्रभु–प्रणामः

औदार्येण सुकामधेनु-दिविषद्वृक्षेन्दु-चिन्तामणि-
वृन्दं ब्रह्मसुखं च सुन्दरतया कन्दर्पवृन्दं प्रभुम् ।
वात्सल्येन सुमातृधेनु–निचयं विस्पर्धिनं नन्दिनं
नित्यानन्दमहं नमामि सततं प्रेमाब्धिसंवर्धिनम् ॥ १ ॥

सङ्कर्षणः कारणतोयशायी
गर्भोदशायी च पयोब्धिशायी ।
शेषश्च यस्यांशकलाः स नित्या-
नन्दाख्यरामः शरणं ममास्तु ॥ २ ॥

नित्यानन्दमहं वन्दे कर्णे लम्बितमौक्तिकम् ।
चैतन्याग्रजरूपेण पवित्रीकृतभूतलम् ॥ ३ ॥

नित्यानन्द नमस्तुभ्यं प्रेमानन्दप्रदायिने ।
कलौ कल्मषनाशाय जाह्नवापतये नमः ॥ ४ ॥

निरानन्दमिदं सर्वं प्रेमानन्दास्पदीकृतम् ।
येन तं सततं वन्दे नित्यानन्दं जगद्गुरुम् ॥ ५ ॥

श्रीमन्नित्यानन्दचन्द्रं करुणामयविग्रहम् ।
चैतन्याभिन्नदेहं तं वन्दे सर्वजनप्रियम् ॥ ६ ॥

नित्यानन्दमहं नौमि सर्वानन्दकरं परम् ।
हरिनामप्रदं देवमवधूत - शिरोमणिम् ॥ ७ ॥

वन्देऽनन्ताद्भुतैश्वर्यं श्रीनित्यानन्दमीश्वरम् ।
यस्येच्छया तत्स्वरूपमज्ञेनापि निरूप्यते ॥ ८ ॥

## विज्ञप्तिः

हाडायिपण्डित - तनूज कृपासमुद्र
पद्मावतीतनय तीर्थपदारविन्द ।
त्वं प्रेमकल्पतरुरार्तिहरावतारो
मां पाहि पामरमनाथमनन्यबन्धुम् ॥ १ ॥

## श्रीअद्वैतप्रभु–ध्यानम्

शुद्धस्वर्णरुचिं दिव्योपवीतं वनमालिनं
तिलतण्डुलकेशाभं सूक्ष्मश्वेताम्बरं विभुम् ।
प्रेमानन्दमयं शान्तं चन्दनाक्तकलेवरं
अद्वैतं गौरचन्द्रस्याचार्यमीशं स्मराम्यहम् ॥ १ ॥

सद्भक्तालि-निषेवितांघ्रि-कमलं कुन्देन्दु-शुक्लाम्बरं
शुद्धस्वर्णरुचिं सुबाहुयुगलं स्मेराननं सुन्दरम् ।
श्रीचैतन्यदृशं वराभयकरं प्रेमाङ्गभूषाञ्चितं
अद्वैतं सततं स्मरामि परमानन्दैककन्दं प्रभुम् ॥ २ ॥

वन्देऽद्वैतं महेशं कनकगिरिनिभं श्वेतवस्त्रं प्रशस्तं
रत्नाकल्पोज्ज्वलाङ्गं जगदघ-हरणे सर्वदोत्कण्ठितं तम् ।
भक्ताधीनं समन्तात् स्तुतममरगणैर्विश्वरक्षावतारं
विश्वाद्यं विश्वबीजं निखिलभयहरं शुद्धभक्तिप्रदं तम् ॥ ३ ॥

उद्यद्विद्युज्जिताभं विमलतरपटं चन्दनालिप्तगात्रं
सत्पुण्ड्रोद्दीप्तभालं सहरिहरि-रव-स्मेर-संयुक्त-वक्त्रम् ।
नृत्यन्तं प्रेममत्तं सुनयन-सलिलैः प्लावितोरस्थहारं
श्रीगौरेन्दोःपुरस्थं प्रभुमतिकरुणं चिन्तयेऽद्वैतचन्द्रम् ॥ ४ ॥

अद्वैतं हरिणाद्वैतमाचार्यं द्विजरूपिणम् ।
तप्तकाञ्चनवर्णाभं प्रेमानन्द-स्मिताननम् ॥ ५ ॥

शुक्लाम्बरधरं गौरभक्ति-लम्पटमानसम् ।
द्विनेत्रं द्विभुजं शान्तं ध्यायेदखिल-सिद्धिदम् ॥ ६ ॥

स्मरामि श्रीमदद्वैतं शुद्ध-स्वर्ण-रुचिं प्रभुम् ।
शुक्लाम्बरधरं गौरभक्ति-लम्पटमानसम् ॥ ७ ॥

## श्रीअद्वैतप्रभु-प्रणामः

येन श्रीहरिरीश्वरः प्रकटयाञ्चक्रे कलौ राधया
प्रेम्णा येन महेश्वरेण सकलं प्रेमाम्बुधौप्लावितम् ।
विश्वं विश्व-विकाशि-कीर्तिमतुलं तं दीनबन्धुं प्रभु-
मद्वैतं सततं नमामि हरिणाद्वैतं हि सर्वार्थदम् ॥ १ ॥

श्रीअद्वैत नमस्तुभ्यं कलिजन-कृपानिधे ।
गौरप्रेम-प्रदानाय श्रीसीतापतये नमः ॥ २ ॥

निस्तारिताशेष-जनं दयालुं प्रेमामृताब्धौ परिमग्न-चित्तम् ।
चैतन्यदेवादृतमादरेण अद्वैतचन्द्रं शिरसा नमामि ॥ ३ ॥

वन्दे आचार्यमद्वैतं भक्तावतारमीश्वरम् ।
यस्य ज्ञात्वा मनोवृत्तिं चैतन्योऽवतरेद्भुवि ॥ ४ ॥

अद्वैताय नमस्तेऽस्तु महेशाय महात्मने ।
यस्य प्रसादाच्चैतन्य-चरणे जायते रतिः ॥ ५ ॥

महाविष्णुर्जगत्कर्ता मायया यः सृजत्यदः ।
तस्यावतार एवायमद्वैताचार्य ईश्वरः ॥ ६ ॥

अद्वैतं हरिणाद्वैतादाचार्यं भक्तिशंसनात् ।
भक्तावतारमीशं तमद्वैताचार्यमाश्रये ॥ ७ ॥

## विज्ञप्तिः

अद्वैत ते करुणया प्रणयावलोकैः
के वाऽभवन्नहि शचीतनयस्य दासाः ।
प्रेमाम्बुधौ च सहसा बत के न मग्नाः
आशापि नो भवति मे बत किं ब्रवीमि ॥ १ ॥

## श्रीगदाधरपण्डित–ध्यानम्

विद्युत्पुञ्ज-विडम्बि-सुन्दर-तनुं हेमाब्ज-दिव्याननं
स्निग्धांघ्रि कर-पाद-हिंगुल-रुचं शुक्लाम्बरं सुन्दरम् ।
भक्तानां परिपालनार्द्रहृदयं श्रीगौरसव्यस्थितं
मंजुं श्रीलगदाधरं प्रभुवरं श्रीपण्डिताख्यं भजे ॥ १ ॥

कारुण्यैक–मरन्द–पद्मचरणं चैतन्यचन्द्रद्युतिं
ताम्बूलार्पणभङ्गि–दक्षिणकरं श्वेताम्बरं सद्वरम् ।
प्रेमानन्द–तनुं सुधास्मितमुखं श्रीगौरचन्द्रेक्षणं
ध्यायेच्छ्रील–गदाधरं द्विजवरं माधुर्यभूषोज्ज्वलम् ॥ २ ॥

## श्रीगदाधरपण्डित–प्रणामः

यत्पादाब्ज-नखाग्र-कान्तिलवतो ह्यज्ञानमोहः क्षयं
यत्कारुण्य-कटाक्षतः स्वयमसौ श्रीगौरचन्द्रो वशम् ।
यातीषद्भजनाच्च यस्य जगतां प्रेमेन्दुरन्तर्नभो
नौमि श्रीलगदाधरं तमतुलानन्दैक–कल्पद्रुमम् ॥ १ ॥

परमरसविभासं सर्वभक्तिप्रकाशं
विविधरसविदाढ्यं प्रेमरत्नैकहृद्यम् ।
नियत–नियमाचारं सर्व–सर्वार्थसारं
मदन–मथनरूपं नौमि राधास्वरूपम् ॥ २ ॥

गदाधरमहं वन्दे माधवाचार्यनन्दनम् ।
महाभावस्वरूपं श्रीचैतन्याभिन्नरूपिणम् ॥ ३ ॥

श्रीह्लादिनीस्वरूपाय गौराङ्गसुहृदाय च ।
भक्तशक्तिप्रदानाय गदाधर नमोऽस्तु ते ॥ ४ ॥

गान्धर्विकास्वरूपाय गौराङ्गप्रेमसम्पदे ।
गदाधराय मे नित्यं नमोऽस्तु हि कृपालवे ॥ ५ ॥

श्रीगौरांग-रसाश्रितं माधवाचार्य-नन्दनम् ।
कुमारं रत्नावत्याश्च वन्दे श्रीमद् गदाधरम् ॥ ६ ॥

## विज्ञप्तिः

हे श्रीगदाधर दयासरितां पतिस्त्वं
प्रेम्णा वशीकृतशचीतनयो विभुश्च ।
पद्मावतीतनय एव तथा वशस्ते
किं ते ब्रवीमि मयि मूढवरे कृपायै ॥ १ ॥

## श्रीश्रीवासपण्डित-ध्यानम्

श्रीगौराङ्ग-कृपावासं गौरमूर्तिं रसप्रदं
शुक्लाम्बरधरं देवं सर्वभक्तजनप्रियम् ।
संकीर्तन-रसावेशं सर्व-सौभाग्य-भूषितं
स्मरामि भक्तराजं हि श्रीवासं श्रीहरिप्रियम् ॥ १ ॥

आश्रयामि श्रीश्रीवासं तमाद्यं पण्डितं सदा ।
शुक्लाम्बरधरं गौरं गौरभक्ति-प्रदायकम् ॥ २ ॥

श्रीगौराङ्ग-कृपापात्रं पण्डिताख्यं सदा शुचिम् ।
शुक्लाम्बरधरं गौरं गौरभक्ति-प्रदायकम् ।
श्रीकीर्तने सदोन्मत्तं ध्यायेत् श्रीवाससत्तमम् ॥ ३ ॥

## श्रीश्रीवासपण्डित-प्रणामः

प्रणमामि श्रीश्रीवासं तमाद्यं पण्डितं मुदा ।
श्रीगौराङ्ग-कृपापात्रं कीर्तनानन्द-मानसम् ॥ १ ॥

गान्धर्विकास्वरूपाय गौराङ्गप्रेमसम्पदे ।
गदाधराय मे नित्यं नमोऽस्तु हि कृपालवे ॥ ५ ॥

श्रीगौरांग–रसाश्रितं माधवाचार्य–नन्दनम् ।
कुमारं रत्नावत्याश्च वन्दे श्रीमद् गदाधरम् ॥ ६ ॥

## विज्ञप्तिः

हे श्रीगदाधर दयासरितां पतिस्त्वं
प्रेम्णा वशीकृतशचीतनयो विभुश्च ।
पद्मावतीतनय एव तथा वशस्ते
किं ते ब्रवीमि मयि मूढवरे कृपायै ॥ १ ॥

## श्रीश्रीवासपण्डित–ध्यानम्

श्रीगौराङ्ग-कृपावासं गौरमूर्तिं रसप्रदं
शुक्लाम्बरधरं देवं सर्वभक्तजनप्रियम् ।
संकीर्तन–रसावेशं सर्व–सौभाग्य–भूषितं
स्मरामि भक्तराजं हि श्रीवासं श्रीहरिप्रियम् ॥ १ ॥

आश्रयामि श्रीश्रीवासं तमाद्यं पण्डितं सदा ।
शुक्लाम्बरधरं गौरं गौरभक्ति–प्रदायकम् ॥ २ ॥

श्रीगौराङ्ग–कृपापात्रं पण्डिताख्यं सदा शुचिम् ।
शुक्लाम्बरधरं गौरं गौरभक्ति–प्रदायकम् ।
श्रीकीर्तने सदोन्मत्तं ध्यायेत् श्रीवाससत्तमम् ॥ ३ ॥

## श्रीश्रीवासपण्डित–प्रणामः

प्रणमामि श्रीश्रीवासं तमाद्यं पण्डितं मुदा ।
श्रीगौराङ्ग–कृपापात्रं कीर्तनानन्द–मानसम ॥ १ ॥

श्रीवासपण्डितं नौमि गौराङ्ग–प्रियपार्षदम् ।
यस्य कृपालवेनापि गौरांगे जायते रतिः ॥ २ ॥

श्रीवास कीर्तनानन्द भक्तगोष्ठ्येकवल्लभ ।
त्वां नमामि महायोगिन् भक्तरूपोऽसि नारदः ॥ ३ ॥

## श्रीश्रीवासादिभक्तवृन्द–ध्यानम्

ये चैतन्य-पदारविन्द-मधुपाः सत्प्रेमभूषोज्ज्वलाः
शुद्ध–स्वर्णरुचो दृगम्बुपुलकस्वेदैः सदङ्गश्रियः ।
सेवोपायन–पाणयः स्मितमुखाः शुक्लाम्बराः सद्वराः
श्रीवासादिमहाशयान् सुखमयान् ध्यायेम तान् पार्षदान् ॥१॥

## श्रीश्रीवासादिभक्तवृन्द–प्रणामः

ये तीर्थप्रमिताः पुनन्ति जगतः सद् वैद्यकल्पाः प्रति-
कुर्वन्तीन्दुनिभाः कृपामृतरुचोऽप्याप्याययन्ति स्वयम् ।
सुस्निग्धा हरिचन्दनानि कलयन्त्याभूषयन्त्यद्भुता
रत्नानीव हि तान् नमामि सततं श्रीवास-मुख्यान् मुहुः ॥१॥

## विज्ञप्तिः

हे श्रीवासादय! इह कृपामूर्तयो गौरचन्द्र–
प्रेमांभोधेः सुर-विटपिनः शान्त-सौम्य-स्वभावाः ।
दीनोद्धारे प्रबल–नियमाः प्रेमदा यूयमेव
तस्मादज्ञं प्रपद–रजसा पापिनं मां पुनीत ॥ १ ॥

## श्रीपञ्चतत्त्व–प्रणामः

पञ्चतत्त्वात्मकं कृष्णं भक्तरूपस्वरूपकम् ।
भक्तावतारं भक्ताख्यं नमामि भक्तशक्तिकम् ॥ १ ॥

वन्दे आचार्यमद्वैतं भक्तावतारमीश्वरम् ।
यस्य ज्ञात्वा मनोवृत्तिं चैतन्योऽवतरद्भुवि ॥ २ ॥

गदाधरमहं वन्दे सहश्रीवासपण्डितम् ।
श्रीचैतन्य-प्रेमपात्रौ भक्तशक्त्यवतारकौ ॥ ३ ॥

नमामि श्रीगौरचन्द्रं नित्यानन्दमद्वैतकम् ।
गदाधर-श्रीवासादि-भक्तेभ्यश्च नमो नमः ॥ ४ ॥

**श्रीगौरनित्यानन्द-प्रणामः**

आजानुलम्बितभुजौ कनकावदातौ
संकीर्तनैकपितरौ कमलायताक्षौ ।
विश्वम्भरौ द्विजवरौ युगधर्मपालौ
वन्दे जगत्प्रियकरौ करुणावतारौ ॥ १ ॥

वन्दे श्रीकृष्णचैतन्य-नित्यानन्दौ सहोदितौ ।
गौडोदये पुष्पवन्तौ चित्रौ शन्दौ तमोनुदौ ॥ २ ॥

अवतीर्णौ स-कारुण्यौ परिच्छिन्नौ सदीश्वरौ ।
श्रीकृष्णचैतन्य-नित्यानन्दौ द्वौ भ्रातरौ भजे ॥ ३ ॥

**श्रीवैष्णव-प्रणामः**

चैतन्यचन्द्र - चरितामृत - शुद्ध - सिन्धु-
वृन्दावनीय - सुरसोर्मि - समुन्निमग्नाः ।
ये वै जगन्निज-गुणैः स्वयमापुनन्ति
तान् वैष्णवांश्च हरिनाम-परान् नमामि ॥ १ ॥

वाञ्छाकल्पतरुभ्यश्च कृपासिन्धुभ्य एव च ।
पतितानां पावनेभ्यो वैष्णवेभ्यो नमो नमः ॥ २ ॥

चैतन्यचरणांभोज - मधुपेभ्यो नमो नमः ।
कथञ्चिदाश्रयाद् येषां श्वापि तद्गन्धभाग भवेत् ॥ ३ ॥

## श्रीगौराङ्गभक्तगण–प्रणामः

गौरभक्तगणान् वन्दे स्वानन्दरसविग्रहान् ।
नाममुद्रालसद्धस्तानाश्रिताश्रयवत्सलान् ॥ १ ॥

नामसंकीर्तनाद्यैश्च कम्पाश्रुपुलकान्वितान् ।
चैतन्यचरणाम्भोज–मकरन्दमधुव्रतान् ॥ २ ॥

## श्रीकृष्ण–ध्यानम्

बर्हापीडाभिरामं मृगमदतिलकं कुण्डलाक्रान्तगण्डं
कञ्जाक्षं कम्बुकण्ठं स्मितसुभगमुखं स्वाधरे न्यस्तवेणुम् ।
श्यामं शान्तं त्रिभंगं रविकरवसनं भूषितं वैजयन्त्या
वन्दे वृन्दावनस्थं युवतिशतवृतं ब्रह्म गोपालवेशम् ॥ १ ॥

कस्तुरीतिलकं ललाटपटले वक्षःस्थले कौस्तुभं
नासाग्रे वरमौक्तिकं करतले वेणुः करे कङ्कणम् ।
सर्वांगे हरिचन्दनं सुललितं कण्ठे च मुक्तावली
गोपस्त्रीपरिवेष्टितो विजयते गोपालचूडामणिः ॥ २ ॥

वंशीन्यस्तास्यचन्द्रं स्मितयुतमतुलं पीतवस्त्रं वरेण्यं
कञ्जाक्षं सर्वदक्षं नवघनसदृशं बर्हचूडं शरण्यम् ।
त्रैभंगैर्भङ्गिमांगं व्रजयुवतियुतं ध्वस्तकेश्यादिशूरं
वन्दे श्रीनन्दसूनुं मधुररस-तनुं धुर्य-माधुर्य-पूरम् ॥ ३ ॥

अंसालम्बित-वामकुण्डलधरं मंदोन्नत-भ्रूलतं
किञ्चित्-कुञ्चित - कोमलाधरपुटं साचिप्रसारेक्षणम् ।
आलोलांगुलि-पल्लवैर्मुरलिकामापूरयन्तं मुदा
मूले कल्पतरोस्त्रिभङ्ग-ललितं ध्यायेज्जगन्मोहनम् ॥ ४ ॥

सजल–जलद–नीलं दर्शितोदार–शीलं
करतल–धृतशैलं वेणुवाद्ये रसालम् ।

व्रजजन – कुलपालं कामिनीकेलि – लोलं
तरुणतुलसिमालं नौमि गोपालबालम् ॥ ५ ॥

व्यत्यस्त – पादकमलं ललित – त्रिभङ्गीं
सौभाग्यमंसविरलीकृत – केशपाशम् ।
पिञ्छावतंसमुररीकृत – वंशनाल–
मव्याजमोहनमुपैमि कृपाविशेषम् ॥ ६ ॥

फुल्लेन्दीवर - कान्तिमिन्दु - वदनं बर्हावतंसप्रियं
श्रीवत्साङ्कमुदार-कौस्तुभधरं पीताम्बरं सुन्दरम् ।
गोपीनां नयनोत्पलार्चित-तनुं गोगोप-सङ्घावृतं
गोविन्दं कलवेणु-वादनपरं दिव्याङ्गभूषं भजे ॥ ७ ॥

ध्यायेद् वृन्दावने रम्ये गोपगोपीगवावृतं
नानालङ्कारसुभगं पीताम्बरयुगावृतम् ।
सर्वप्रियकरं देवं किशोरश्यामविग्रहं
दोर्भ्यां वेणुं वादयन्तं भुवनैकगुरुं परम् ॥ ८ ॥

स्मरेद्वृन्दावने रम्ये मोहयन्तमनारतम् ।
गोविन्दं पुण्डरीकाक्षं गोपकन्याः सहस्रशः ॥

आत्मनो वदनाम्भोजे प्रेरिताक्षिमधुव्रताः ।
पीडिताः कामबाणेन चिरमाश्लेषणोत्सुकाः ॥

मुक्ताहार - लसत् - पीनोत्तुङ्ग - स्तनभरानताः ।
स्रस्त-धम्मिल्ल - वसना मद-स्खलित - भाषणाः ॥

दन्तपंक्ति - प्रभोद्भासि - स्पन्दमानाधराञ्चिताः ।
विलोभयन्तीर्विविधैर्विभ्रमैर्भावगर्वितैः ॥९-१२॥

सत्पुण्डरीकनयनं मेघाभं वैद्युतांबरम् ।
द्विभुजं मौनमुद्राढ्यं वनमालिनमीश्वरम् ॥१३॥

गोपगोपीगवावीतं सुरद्रुमलताश्रयम् ।
दिव्यालंकरणोपेतं रक्तपंकजमध्यगम् ॥१४॥

कालिन्दीजलकल्लोल - संगिमारुतसेवितम् ।
चिन्तयंश्चेति तं कृष्णं मुक्तो भवति संसृतेः ॥१५॥

पीताम्बरं घनश्यामं द्विभुजं वनमालिनम् ।
बर्हिबर्हकृतापीडं शशिकोटिनिभाननम् ॥ १६ ॥

घूर्णायमाननयनं कर्णिकारावतंसिनम् ।
अभितश्चन्दनेनाथ मध्ये कुंकुमबिन्दुना ॥ १७ ॥

रचितं तिलकं भाले बिभ्रतं मण्डलाकृतिम् ।
तरुणादित्यसङ्काश -- कुण्डलाभ्यां विराजितम् ॥ १८ ॥

घर्माम्बु -- कणिका -- राजद्दर्पणाभ -- कपोलकम् ।
प्रिया -- मुखार्पितापाङ्ग -- लीलया चोन्नतभ्रुवम् ॥ १९ ॥

अग्रभाग -- न्यस्त -- मुक्ता -- स्फुरदुच्च -- सुनासिकम् ।
दशन - ज्योत्स्नया राजत् - पक्वबिम्बफलाधरम् ॥ २० ॥

केयूराङ्गदसद्रत्न -- मुद्रिकाभिर्लसत्करम् ।
बिभ्रतं मुरलीं वामे पाणौ पद्मं तथोत्तरे ॥ २१ ॥

काञ्चीदाम--स्फुरन्मध्यं नूपुराभ्यां लसत्पदम् ।
रतिकेलि -- रसावेश -- चपलं चपलेक्षणम् ॥ २२ ॥

हसन्तं प्रियया सार्धं हासयन्तं च तां मुहुः ।
इत्थं कल्पतरोमूले रत्नसिंहासनोपरि ।
वृन्दावने स्मरेत् कृष्णं सुस्थितं प्रियया सह ॥ २३ ॥

नवीन -- वारिद -- श्यामं पद्मपत्रनिभेक्षणम् ।
मुक्तादाम -- लसत्कण्ठं केयूराङ्गदभूषणम् ॥ २४ ॥

अनेकरत्न -- संबद्ध -- स्फुरन्मकर -- कुण्डलम् ।
उद्दाम -- कौस्तुभोद्भासि -- वक्षः -- श्रीवत्सलाञ्छनम् ॥ २५ ॥

बर्हिबर्हकृतोत्तंसं गोपगोपीगवावृतम् ।
श्रीकृष्णमीदृशं ध्यायेत् श्रीमद्वृन्दावने स्थितम् ॥ २६ ॥

पीताम्बरधरं कृष्णं पुण्डरीक–निभेक्षणम् ।
रक्तनेत्राधरं रक्त-पाणिपाद-नखं शुभम् ॥ २७ ॥

कौस्तुभोद्भासितोरस्कं नानारत्न - विभूषितम् ।
तद्धाम - विलसन्मुक्ताबद्ध - हारोपशोभितम् ॥ २८ ॥

नानारत्न - प्रभोद्भासि - मुकुटं दिव्यतेजसम् ।
हार - केयूर - कटक - कुण्डलैः परिमण्डितम् ॥ २९ ॥

श्रीवत्स - वक्षसं चारु - नूपुराद्युपशोभितम् ।
नानारत्न - विचित्रैश्च कटिसूत्रांगुलीयकैः ॥ ३० ॥

बर्हिपत्रकृतापीडं वनपुष्पैरलंकृतम् ।
सचन्द्रतारकानन्द - विमलाम्बर - सन्निभम् ॥ ३१ ॥

वेणुं गृहीत्वा हस्ताभ्यां मुखे संयोज्य संस्थितम् ।
सर्वलक्षण - सम्पन्नं सौन्दर्येणाभिशोभितम् ।
मोहनं सर्वगोपीनां साक्षान्मन्मथ-मन्मथम् ॥ ३२ ॥

श्रीमद् वृन्दावने रम्ये स्थितं रत्नसिंहासने ।
श्रीराधिका-सुसंयुक्तं कृष्णं ध्यायेदहर्निशम् ॥ ३३ ॥

कैशोर - वयसोपेतं मेघपुञ्ज - वपुःप्रभम् ।
तडिद् वस्त्र-युगोपेतं किङ्किणीजाल-मण्डितम् ।
नटवेश – समायुक्तं कृष्णचन्द्रमहं भजे ॥ ३४ ॥

**श्रीकृष्ण–प्रणामः**

नामाकृष्टरसज्ञः शीलेनोद्दीपयन् सदानन्दम् ।
निजरूपोत्सवदायी सनातनात्मा प्रभुर्जयति ॥ १ ॥

नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥ २ ॥

नमो नलिननेत्राय वेणुवाद्यविनोदिने ।
राधाधरसुधापानशालिने वनमालिने ॥ ३ ॥

हे कृष्ण ! करुणासिन्धो ! दीनबन्धो ! जगत्पते !
गोपेश ! गोपिकाकान्त ! राधाकान्त ! नमोऽस्तु ते ॥ ४ ॥

कृष्णाय वासुदेवाय हरये परमात्मने ।
प्रणतक्लेशनाशाय गोविन्दाय नमो नमः ॥ ५ ॥

श्रीगोविन्दं घनश्यामं पीताम्बरधरं परम् ।
श्रीनन्दनन्दनं नौमि श्रीगोपीजनवल्लभम् ॥ ६ ॥

कृष्णाय कृष्णचन्द्राय वृन्दावनविहारिणे ।
नमस्ते बल्लवीशाय राधिकापतये नमः ॥ ७ ॥

कन्दर्पकोटिरम्याय स्फुरदिन्दीवरत्विषे ।
जगन्मोहनलीलाय नमो गोपेन्द्रसूनवे ॥ ८ ॥

कृष्णाय वासुदेवाय देवकीनन्दनाय च ।
नन्दगोपकुमाराय गोविन्दाय नमो नमः ॥ ९ ॥

श्रीगोविन्दं व्रजानन्द–सन्दोहामन्द–मन्दिरम् ।
वन्दे वृन्दावनानन्दं श्रीराधा–सङ्ग–नन्दितम् ॥ १० ॥

श्रीमन्मदनगोपालं वृन्दावनपुरन्दरम् ।
श्रीगोविन्दं प्रपद्येऽहं दीनानुग्रहकातरम् ॥ ११ ॥

श्रवसोः कुवलयमक्ष्णोरञ्जनमुरसो महेन्द्रमणिदाम ।
वृन्दावनतरुणीनां मण्डनमखिलं हरिर्जयतीति ॥ १२ ॥

केऽपीहाऽत्र किमप्यहो परतमं संवर्णयन्तु स्फुटं
ह्यस्माकं तु न दीनमीनसदृशां कृष्णाब्धितोऽन्या गतिः ।
तस्मात् सर्वावतारकारणकलांशानामिनंनामिनं
श्रीयुक्तं श्रुतिमृग्यपादरजसं तं कृष्णमेवाऽऽश्रये ॥ १३ ॥

## विज्ञप्तिः

प्रणिपत्य भवन्तमर्थये पशुपालेन्द्र–कुमार! काकुभिः ।
व्रजयौवत-मौलि-मालिका-करुणापात्रमिमं जनं कुरु ॥ १ ॥

अयिनन्दतनुज किङ्करं पतितं मां विषमे भवांबुधौ ।
कृपया तव पादपङ्कजस्थितधूलीसदृशं विचिन्तय ॥ २ ॥

## श्रीराधिका-ध्यानम्

अमलकमलकान्तिं नीलवस्त्रां सुकेशीं
शशधरसमवक्त्रां खञ्जनाक्षीं मनोज्ञाम् ।
स्तनयुगगतमुक्तादामदीप्तां किशोरीं
व्रजपतिसुतकान्तां राधिकामाश्रयेऽहम् ॥ १ ॥

स्मेरां गोरोचनाभां स्फुरदरुण-पट-प्रान्तक्लृप्तावगुण्ठां
रम्यां वेशेन वेणीकृत-चिकुर-घटालम्बि-पद्मां किशोरीम् ।
तर्जन्यंगुष्ठयुक्तां हरिमुखकमले युञ्जतीं नागवल्लीं
पूर्णां कर्णायताक्षीं त्रिजगति मधुरां राधिकां भावयामि ॥ २ ॥

हेमाभां द्विभुजां वराभयकरां नीलाम्बरेणावृतां
श्यामक्रोड–विलासिनीं भगवतीं सिन्दूरपुञ्जोज्ज्वलाम् ।
लोलाक्षीं नवयौवनां स्मितमुखीं बिम्बाधरां राधिकां
नित्यानन्दमयीं विलासनिलयां दिव्याङ्गभूषां भजे ॥ ३ ॥

तप्तस्वर्णप्रभां राधां सर्वालङ्कारभूषिताम् ।
नीलवस्त्रपरीधानां भजे वृन्दावनेश्वरीम् ॥ ४ ॥

सुचीननीलवसनां द्रुतहेमसमप्रभाम् ।
पटाञ्चलेनावृतार्धसुस्मेराननपङ्कजाम् ॥

कान्तवक्त्रे न्यस्तनेत्रां चकोरीचञ्चलेक्षणाम् ।
अंगुष्ठतर्जनीभ्यां च निजप्रियमुखाम्बुजे ॥

अर्पयन्तीं पूगफालिं पर्णचूर्णसमन्विताम् ।
मुक्ताहारस्फुरच्चारुपीनोन्नतपयोधराम् ॥

क्षीणमध्यां पृथुश्रोणीं किङ्किणीजालशोभिताम् ।
रत्नताटङ्ककेयूरमुद्राबलयधारिणीम् ॥

रणत् – कनक – मञ्जीर – रत्न – पादांगुरीयकाम् ।
लावण्यसार – सर्वाङ्ग – सर्वावयव – सुन्दरीम् ॥

आनन्दरससंमग्नां प्रसन्नां नवयौवनाम् ।
श्रीराधिकां स्मरेद्देवीं कृष्णवामदिशिस्थिताम् ॥५-१०॥

तप्तकाञ्चनगौराङ्गीं चिन्तामणिकलापिनीम् ।
सिन्दूरबिन्दुशोभाढ्यां कस्तूरीवरपत्रिकाम् ॥ ११ ॥

इन्दीवरविशालाक्षीं श्रीयुक्तकमलाननाम् ।
मधुरस्मेरसम्भाषां बिम्बाधरसुधामयीम् ॥ १२ ॥

नासाग्रविलसन्मुक्तां कपोलालोलकुण्डलाम् ।
युग्म – श्रीफल – वक्षोजां शङ्खकङ्कणधारिणीम् ॥ १३ ॥

मल्लिकाहारकेयूरां नीलपट्टाम्बरावृताम् ।
आलक्तपादकमलां कूजन्नूपुररञ्जिनीम् ॥ १४ ॥

लीलालावण्यकल्याणीं लीलागानविनोदिनीम् ।
कृष्णपार्श्वगतां देवीं कृष्णाह्लादविधायिनीम् ॥ १५ ॥

विशाखा–ललिता–मुखैरालिवृन्दैः सुसंवृताम् ।
ध्यायेद् वृन्दावने रम्यां परमाराध्यराधिकाम् ॥ १६ ॥

तप्तहेमप्रभां नील–कुन्तलाबद्ध–मल्लिकाम् ।
शरच्चन्द्रमुखीं नित्यां चकोरी–चञ्चलेक्षणाम् ॥ १७ ॥

बिम्बाधरां स्मित–ज्योत्स्नां जगज्जीवन–दायिकाम् ।
चारु–पद्म–स्तनालम्बी–मुक्तादाम–सुशोभिताम् ॥ १८ ॥

नितम्ब–नीलवसनां किङ्किणीजाल–मण्डिताम् ।
नानारत्नादि–सुभगां सखीसङ्घ–समावृताम् ॥ १९ ॥

कृष्णपार्श्वे स्थितां नित्यं कृष्णप्रेमैकविग्रहाम् ।
आनन्दरस–संमग्नां किशोरीमाश्रये वने ॥ २० ॥

## श्रीराधिका–प्रणामः

तप्तकाञ्चनगौराङ्गि ! राधे ! वृन्दावनेश्वरि !
वृषभानुसुते ! देवि ! त्वां नमामि हरिप्रिये ! १ ॥

नवीनां हेमगौराङ्गीं प्रवरेन्दीवराम्बराम् ।
वृषभानुसुतां वन्दे कृष्णाकन्ताशिरोमणिम् ॥ २ ॥

तप्तकाञ्चन-गौराङ्गीं रङ्गिणीं प्रमदाकृतिम् ।
वृषभानुसुतां वन्दे वृन्दावन-विलासिनीम् ॥ ३ ॥

नवीनां हेमगौराङ्गीं पूर्णानन्दवतीं सतीम् ।
वृषभानुसुतां देवीं वन्दे राधां जगत्प्रसूम् ॥ ४ ॥

राधां रासेश्वरीं रम्यां गोविन्दमोहिनीं पराम् ।
वृषभानुसुतां देवीं नमामि श्रीहरिप्रियाम् ॥ ५ ॥

महाभावस्वरूपा त्वं कृष्णप्रिया-वरीयसी ।
प्रेमभक्ति-प्रदे ! देवि ! राधिके ! त्वां नमाम्यहम् ॥ ६ ॥

रासोत्सव-विलासिनि ! नमस्ते परमेश्वरि !
कृष्णप्राणाधिके राधे ! परमानन्द-विग्रहे ! ७ ॥

प्रणमामि महानृत्यमयीं त्वामतिसुन्दरीम् ।
रत्नालंकार-शोभाढ्यां कुंकुमार्चित-विग्रहाम् ॥ ८ ॥

**विज्ञप्तिः**

तस्या अपाररससारविलासमूर्ते-
रानन्दकन्दपरमाद्भुतसौख्यलक्ष्म्याः ।
ब्रह्मादिदुर्लभगतेर्वृषभानुजायाः
कैङ्कर्यमेव मम जन्मनि जन्मनि स्यात् ॥ १ ॥

हा ! देवि काकुभरगद्गदयाद्य वाचा
याचे निपत्य भुवि दण्डवदुद्भटार्तिः ।
अस्य प्रसादमबुधस्य जनस्य कृत्वा
गान्धर्विके तव गणे गणनां विधेहि ॥ २ ॥

भवतीमभिवाद्य चाटुभिर्वरमूर्जेश्वरि ! वर्यमर्थये ।
भवदीयतया कृपां यथा मयि कुर्यादधिकां बकान्तकः ॥ ३ ॥

गोविन्दवल्लभे राधे प्रार्थये त्वामहं सदा ।
त्वदीयमिति जानातु गोविन्दो मां त्वया सह ॥ ४ ॥

राधे वृन्दावनाधीशे करुणामृतवाहिनि ।
कृपया निजपादाब्जदास्यं मह्यं प्रदीयताम् ॥ ५ ॥

## श्रीयुगलकिशोर–ध्यानम्

कनक – जलद – गात्रौ नीलशोणाब्जनेत्रौ
मृगमदवर – भालौ मालती – कुन्दमालौ ।
तरल – तरुण – वेशौ नीलपीताम्बरेशौ
स्मर निभृत – निकुञ्जे राधिका – कृष्णचन्द्रौ ॥ १ ॥

हेमेन्दीवर–कान्ति–मंजुलतरं श्रीमज्जगन्मोहनं
नित्याभिर्ललितादिभिः परिवृतं सन्नील-पीताम्बरम् ।
नानाभूषण-भूषिताङ्गमधुरं कैशोररूपं युगं
गान्धर्वाजनमव्ययं सुललितं नित्यं शरण्यं भजे ॥ २ ॥

अङ्गश्यामलिमच्छटाभिरभितो मन्दीकृतेन्दीवरं
जाड्यञ्जागुडरोचिषां विदधतं पट्टाम्बरस्य श्रिया ।
वृन्दारण्य–निवासिनं हृदि लसद्दामाभिरामोदरं
राधास्कन्ध-निवेशितोज्ज्वल-भुजं ध्यायेम दामोदरम्॥ ३ ॥

दीव्यद् वृन्दारण्य–कल्पद्रुमाधः
श्रीमद्रत्नागार – सिंहासनस्थौ ।
श्रीमद्राधा–श्रीलगोविन्ददेवौ
प्रेष्ठालीभिः सेव्यमानौ स्मरामि ॥ ४ ॥

श्रीकृष्णं श्रीघनश्यामं पूर्णानन्दकलेवरम् ।
द्विभुजं सर्वदेवेशं राधालिङ्गितविग्रहम् ॥ ५ ॥

## श्रीयुगलकिशोर-प्रणामः

वन्दे वृन्दावनगुरुं कृष्णं कमललोचनम् ।
बल्लवी-वल्लभं देवं राधालिङ्गित-विग्रहम् ॥ १ ॥

श्रीगोविन्दं व्रजानन्द-सन्दोहामन्द-मन्दिरम् ।
वन्दे वृन्दावनानन्दं श्रीराधा-सङ्ग-नन्दितम् ॥ २ ॥

## विज्ञप्तिः

राधेति नाम नवसुन्दर-सीधु मुग्धं
कृष्णेति नाम मधुराद्भुत-गाढदुग्धम् ।
सर्वक्षणं सुरभिराग-हिमेन रम्यं
कृत्वा तदेव पिब मे रसने क्षुधार्ते ॥ १ ॥

## श्रीबालगोपाल-ध्यानम्

अव्याद्व्याकोष-नीलाम्बुज-रुचि-ररुणाम्भोज-नेत्रोऽम्बुजस्थो
बालो जङ्घा-कटीरस्थल-कलित-रणत्-किङ्किणीको मुकुन्दः ।
दोर्भ्यां हैयङ्गवीनं दधदतिविमलं पायसं विश्ववन्द्यो
गो-गोपी-गोप-वीतो रुरुनख-विलसत्-कण्ठभूषश्चिरं वः ॥ १ ॥

भजेऽहं बालकं सुप्तं पर्यङ्के स्तनपायिनं
श्रीवत्स - वक्षसं कृष्णं नीलोत्पल - दलप्रभम् ।
मालया वैजयन्त्या च कौस्तुभेन विभूषितं
महाभुजं महःपूर्णं रसामृत-तनुं विभुम् ॥ २ ॥

नीलपद्म-समानाक्षं कृष्णं गोपालरूपिणं
नानारत्न-समाबद्ध-विचित्राभरणान्वितम् ।
रक्तपद्म-समासीनं दध्योत्थ-पायसं वरं
दधतं करपद्माभ्यां भजेऽहं शिशुभिर्वृतम् ॥ ३ ॥

ध्यायेद् वृन्दावने कृष्णं गोपशिशुगणावृतम् ।
हस्ताभ्यां वेणुशृङ्गं च श्यामलं विश्वमोहनम् ।
बहुरत्न – समाबद्ध – किङ्किणी – हार – नूपुरम् ॥ ४ ॥

जानुभ्यां धरणी – गतं करतले विन्यस्त – हैयङ्गवं
सव्येनाश्रित–भूतलं घनरुचिं सुस्मेर-वक्त्राम्बुजम् ।
मुक्ताविद्रुम–हेमभूषण–लसद्देहं जगद्वन्दितं
बालं बाल–विचेष्टितं शरणदं शश्वन्मुकुन्दं भजे ॥ ५ ॥

पञ्चवर्षमतिदृप्तमङ्गणे धावमानमतिचञ्चलेक्षणम् ।
किङ्किणी-बलय-हार-नूपुरैरञ्चितं नमत गोपबालकम् ॥ ६ ॥

वृन्दावनगतं ध्यायेत् कल्पकोद्यान–मध्यगम् ।
दोलायमानं गोपीभिः सुवर्णदोलिकागतम् ॥ ७ ॥

सूर्यायुत – समाभासं लसन्मकर – कुण्डलम् ।
नानारत्न – परिभ्राजन्नानालङ्कार मण्डितम् ॥ ८ ॥

पञ्चवर्षावधिं बालं कुन्तलोल्लासि–सम्मुखम् ।
हसतोदारकान्त्या च भासयन्तं दिगन्तरम् ॥ ९ ॥

कलायकुसुम–श्यामं नीलेन्दीवर – लोचनम् ।
नानालङ्कार–सुभगं बालं तं पञ्चहायनम् ॥ १० ॥

तारहारावलीरम्यं गोपगोपीगवावृतम् ।
दध्युत्थ–पायसं स्फीतं कराभ्यां दधतं भजे ॥ ११ ॥

करारविन्देन पदारविन्दं मुखारविन्दे विनिवेशयन्तम् ।
व्रजेश्वरी-क्रोड-गतं हसन्तं बालं मुकुन्दं मनसा स्मरामि ॥१२॥

## श्रीबालगोपाल–प्रणामः

नवीन–नीरद–श्यामं नीलेन्दीवर–लोचनम् ।
यशोदा–नन्दनं नौमि कृष्णं गोपालरूपिणम् ॥ १ ॥

नीलोत्पलदल–श्यामं यशोदा–नन्द–नन्दनम् ।
गोपिका – नयनानन्दं गोपालं प्रणमाम्यहम् ॥ २ ॥

## श्रीनवद्वीपधाम–ध्यानम्

स्वर्धुन्याश्चारुतीरे स्फुरितमतिबृहत्-कूर्मपृष्ठाभ-गात्रं
रम्यारामावृतं सन्मणिकनक-महासद्मसंघैः परीतम् ।
नित्यं प्रत्यालयोद्यत्-प्रणयभर-लसत्-कृष्णसंकीर्तनाढ्यं
श्रीवृन्दाटव्यभिन्नं त्रिजगदनुपमं श्रीनवद्वीपमीडे ॥ १ ॥

## श्रीनवद्वीपधाम–प्रणामः

नवीन–श्रीभक्तिं नव–कनक–गौराकृति–पतिं
नवारण्य–श्रेणी–नव–सुरसरिद्वात–वलितम् ।
नवीन–श्रीराधाहरि–रसमयोत्कीर्तन–विधिं
नवद्वीपं वन्दे नव--करुण--माद्यन्नव--रुचिम् ॥ १ ॥

## श्रीवृन्दावनधाम–ध्यानम्

श्रीमद् वृन्दावनं रम्यं यमुनायाः प्रदक्षिणे--
शुद्धस्वर्णमयं स्थानं कल्पवृक्ष--सुशोभनम् ।
नानापुष्पवृतं तत्र गन्धेन परिपूरितं
ध्येयं वृन्दावनं धाम गोपगोपी--विराजितम् ॥ १ ॥

श्रीमद् वृन्दावनं रम्यं यमुनावेष्टितं शुभं
शुद्धस्फटिक--संस्थानं कल्पवृक्ष--सुशोभितम् ।
नानावर्ण--कुसुमानां रेणुभिः परिपूरितं
ध्येयं वृन्दावनं नित्यं गोविन्द--स्थानमव्ययम् ॥ २ ॥

## श्रीवृन्दावनधाम–प्रणामः

जयति जयति वृन्दारण्यमेतन्मुरारेः
प्रियतममतिसाधुस्वान्तवैकुण्ठवासात् ।
रमयति स सदा गाः पालयन् यत्र गोपीः
स्वरितमधुरवेणुर्वर्धयन् प्रेम रासे ॥ १ ॥

आनन्द--वृन्द--परितुन्दिलमिन्दिराया
आनन्द--वृन्द--परिनन्दित--नन्दपुत्रम् ।
गोविन्द--सुन्दर--वधू--परिनन्दितं तद्–
वृन्दावनं मधुर--मूर्तमहं नमामि ॥ २ ॥

## श्रीपौर्णमासीदेवी–प्रणामः

राधेश--केलि--प्रभुता--विनोद–
विन्यास–विज्ञां व्रज–वन्दितांघ्रिम् ।
कृपालुताद्याखिल--विश्ववन्द्यां
श्रीपौर्णमासीं शिरसा नमामि ॥ १ ॥

श्रीपौर्णमास्याश्चरणारविन्दं
वन्दे सदा भक्ति--वितान--हेतुम् ।
श्रीकृष्णलीलाब्धि--तरंग--मग्नं
यस्या मनः सर्व--निषेवितायाः ॥ २ ॥

## श्रीवृन्दादेवी–ध्यानम्

गांगेय--चांपेय--तडिद्--विनिन्दि--
रुचि--प्रवाह--स्नपितात्मवृन्दे ।
बन्धूकवद्द्योतित--दिव्य--वासो--
वृन्दे ! भजे त्वच्चरणारविन्दम् ॥ १ ॥

## श्रीवृन्दादेवी–प्रणामः

तवारण्ये देवि ! ध्रुवमिह मुरारिर्विहरति
सदा प्रेयस्येति श्रुतिरपि विरौति स्मृतिरपि ।
इति ज्ञात्वा वृन्दे ! चरणमभिवन्दे तव कृपां
कुरुष्व क्षिप्रं मे फलतु नितरां तर्षविटपी ॥ १ ॥

## श्रीश्यामकुण्ड–प्रणामः

दुष्टारिष्टवधे स्वयं समभवत् कृष्णांघ्रिपद्मादिदं
स्फीतं यन्मकरन्द-विस्तृतिरिवारिष्टाख्यमिष्टं सरः ।
सोपानैः परिरञ्जितं प्रियतया श्रीराधया कारितैः
प्रेमालिङ्गदिव प्रियासर इदं तन्नित्यनित्यं भजे ॥ १ ॥

## श्रीराधाकुण्ड–प्रणामः

श्रीवृन्दाविपिनं सुरम्यमपि तच्छ्रीमान् स गोवर्धनः
सा रासस्थलिकाप्यलं रसमयैः किन्तावदन्यस्थलैः ।
यस्याप्यंशलवेन नार्हति मनाक् साम्यं मुकुन्दस्य तत्
प्राणेभ्योऽप्यधिकं प्रियेव दयितं तत्कुण्डमेवाश्रये ॥ १ ॥

## श्रीगोवर्धन-प्रणामः

गोवर्धनो जयति शैलकुलाधिराजो
यो गोपिकाभिरुदितो हरिदासवर्यः ।
कृष्णेन शक्रमखभङ्गकृतार्चितो यः
सप्ताहमस्य करपद्मतलेऽप्यवात्सीत् ॥ १ ॥

सप्ताहमेवाच्युत--हस्त--पङ्कजे
भृङ्गायमानं फलमूल--कन्दरैः ।
संसेव्यमानं हरिमात्मवृन्दकै--
र्गोवर्धनाद्रिं शिरसा नमामि ॥ २ ॥

## श्रीव्रजवासिवृन्द-प्रणामः

मुदा यत्र ब्रह्मा तृणनिकर--गुल्मादिषु परं
सदा कांक्षन् जन्मार्पित-विविध-कर्माण्यनुदिनम् ।
क्रमाद् ये तत्रैव व्रजभुवि वसन्ति प्रियजनाः
मया ते ते वन्द्याः परमविनयाः पुण्यखचिताः ॥ १ ॥

## श्रीगोपीश्वर-शिव-प्रणामः

वृन्दावनावनिपते ! जय सोम ! सोममौले !
सनक--सनन्दन--सनातन--नारदेड्य ।
गोपीश्वर ! व्रजविलासि--युगांघ्रि--पद्मे
प्रेम प्रयच्छ निरुपाधि नमो नमस्ते ॥ १ ॥

## श्रीयमुना-प्रणामः

चिदानन्दभानोः सदा नन्दसूनोः
परप्रेमपात्री द्रवब्रह्मगात्री ।
अघानां लवित्री जगत्क्षेमधात्री
पवित्रीक्रियान्नो वपुर्मित्रपुत्री ॥ १ ॥

जयति तरणिपुत्री धर्मराजस्वसा या
कलयति मथुरायाः सख्यमत्येति गङ्गाम् ।
मुरहरदयिता तत्पादपद्मप्रसूतं
वहति च मकरन्दं नीरपूरच्छलेन ॥ २ ॥

गङ्गादि--तीर्थ--परिषेवित--पादपद्मां
गोलोक--सौख्यरस--पूरमहिं महिम्ना ।
आप्लाविताखिल--सुधासु--जलां सुखाब्धौ
राधामुकुन्द--मुदितां यमुनां नमामि ॥ ३ ॥

## श्रीगङ्गा-प्रणामः

नवद्वीपाराम--प्रकर--कुसुमामोद--वलितां
स्फुरद्रत्न--श्रेणी-चित--तट--सुतीर्थावलि--युताम् ।
हरेग राङ्गस्यातुल--चरण--रेणूक्षित--तनुं
समुद्यत्--प्रेमोर्मिं तुमुल--हरिसंकीर्तन--रसैः ॥ १ ॥

प्रभु--क्रीडापात्रीममृत--रसगात्रीमृषिघटा--
शिव--ब्रह्मेन्द्रादीडित--महित--माहात्म्य मुखराम् ।
लसत्-किञ्जल्काम्भोजनि-मधुप-गर्भोरु--करुणा--
महं वन्दे गङ्गामघ-निकर-भङ्गा-जलकणाम् ॥ २ ॥

सद्यः पातकसंहन्त्री सद्यो दुःखविनाशिनी ।
सुखदा मोक्षदा गङ्गा गंगैव परमा गतिः ॥ ३ ॥

**श्रीतुलसी–प्रणामः**

वृन्दायै तुलसीदेव्यै प्रियायै केशवस्य च ।
विष्णुभक्तिप्रदे देवि ! सत्यवत्यै नमो नमः ॥ १ ॥

महाप्रसाद–जननी सर्व–सौभाग्य–वर्धिनी ।
आधिव्याधिहरी नित्यं तुलसि ! त्वं नमोऽस्तु ते ॥ २ ॥

या दृष्टा निखिलाघ-सङ्घ-शमनी स्पृष्टा वपुःपावनी
रोगाणामभिवन्दिता निरसनी सिक्तान्तक-त्रासिनी ।
प्रत्यासत्ति-विधायिनी भगवतः कृष्णस्य संरोपिता
न्यस्ता तच्चरणे विमुक्ति-फलदा तस्यै तुलस्यै नमः ॥ ३ ॥

**श्रीतुलसी–स्नानमंत्रः**

गोविन्द -वल्लभां देवीं भक्त-चैतन्य-कारिणीम् ।
स्नापयामि जगद्धात्रीं विष्णुभक्ति–प्रदायिनीम् ॥ १ ॥

**श्रीतुलसी–प्रदक्षिणमंत्रः**

यानि कानि च पापानि ब्रह्महत्यादिकानि च ।
तत्सर्वं विलयं याति तुलसि ! त्वत् – प्रदक्षिणात् ॥ १ ॥

**श्रीतुलसी–चयनमंत्रः**

तुलस्यमृतजन्मासि सदा त्वं केशव--प्रिये ।
केशवार्थे चिनोमि त्वां वरदा भव शोभने ॥

त्वदंग–संभवैः पत्रैः पूजयामि यथा हरिम् ।
तथा कुरु पवित्रांगि ! कलौ मल–विनाशिनी ॥

चयनोद्भव-दुःखन्ते यद्देवि ! हृदि वर्तते ।
तत् क्षमस्व जगन्मातस्तुलसि ! त्वां नमाम्यहम् ॥१-३॥

मोक्षैक-हेतो धरणी-प्रशस्ते !
विष्णोः समस्तस्य गुरोः प्रियेति ।
आराधनार्थं वर-मंजरीकं
लुनामि पत्रं तुलसि ! क्षमस्व ॥ ४ ॥

मातस्तुलसि ! गोविन्द-हृदयानन्द-कारिणि ।
दामोदरस्य पूजार्थं चिनोमि त्वां नमोऽस्तु ते ॥

कुसुमैः पारिजाताद्यैर्गन्धाद्यैरपि केशवः ।
त्वया विना नैव तृप्तश्चिनोमि त्वामतः शुभे ॥

त्वया विना महाभागे ! समस्त-कर्म निष्फलम् ।
अतस्तुलसि देवि ! त्वां चिनोमि वरदा भव ॥५-७॥

## श्रीतुलसीमाला-धारणमंत्रः

तुलसीकाष्ठ-संभूते माले ! कृष्णजन-प्रिये ।
बिभर्मि त्वामहं कण्ठे कुरु मां कृष्ण-वल्लभम् ॥

यथा त्वं वल्लभा विष्णोर्नित्यं विष्णुजन-प्रिया ।
तथा मां कुरु देवेशि ! नित्यं विष्णुजन-प्रियम् ॥

दाने ला धातुरुद्दिष्टो लासि मां हरि-वल्लभे ।
भक्तेभ्यश्च समस्तेभ्यस्तेन माला निगद्यसे ॥१-३॥

**तिलक-धारणमंत्रः**

ललाटे केशवं ध्यायेन्नारायणमथोदरे ।
वक्षःस्थले माधवं तु गोविन्दं कण्ठ-कूपके ॥

विष्णुं च दक्षिणे कुक्षौ बाहौ च मधुसूदनम् ।
त्रिविक्रमं कन्धरे तु वामनं वाम-पार्श्वके ॥

श्रीधरं वाम-बाहौ च हृषीकेशं तु कन्धरे ।
पृष्ठे तु पद्मनाभं च कट्यां दामोदरं न्यसेत् ।
तत्प्रक्षालन-तोयं तु वासुदेवेति मूर्धनि ॥१-३॥

**श्रीश्यामकुण्ड-स्नानमंत्रः**

उद्धूतं कृष्ण-पादाब्जादरिष्ट-वधतश्छलात् ।
पाहि मां पामरं स्नामि श्यामकुण्ड ! जले तव ॥ १ ॥

**श्रीराधाकुण्ड-स्नानमंत्रः**

राधिकासम-सौभाग्य ! सर्वतीर्थ-प्रवन्दित !
प्रसीद राधिकाकुण्ड ! स्नामि ते सलिले शुभे ॥ १ ॥

**श्रीयमुना-स्नानमंत्रः**

कलिन्दतनये ! देवि ! परमानन्दवर्धिनि ।
स्नामि ते सलिले सर्वापराधान्मां विमोचय ॥ १ ॥

## श्रीगङ्गा-स्नानमंत्रः

विष्णुपाद-प्रसूतासि वैष्णवी विष्णुदेवता ।
पाहि नस्त्वेनसस्तस्मादाजन्म-मरणान्तिकात् ॥ १ ॥

## स्नानकाले-तीर्थावाहनमंत्रः

गंगे च यमुने चैव गोदावरि सरस्वति ।
नर्मदेसिन्धोकावेरि जलेऽस्मिन् सन्निधिं कुरु ॥ १ ॥

कुरुक्षेत्र-गया-गङ्गा-प्रभास-पुष्कराणि च ।
तीर्थान्येतानि पुण्यानि स्नानकाले भवन्त्विह ॥ २ ॥

पावनाख्यं सरः श्रीमत् मानस-जाह्नवी तथा ।
यमुना श्यामकुण्डं च राधाकुण्डं तथैव च ।
एतानि पुण्य-तीर्थानि स्नानकाले भवन्त्विह ॥ ३ ॥

## श्रीनाममाला-ग्रहणध्यानम्

त्रिभङ्ग-भङ्गिम-रूपं वेणुरन्ध्र-कराञ्चितम् ।
गोपी-मंडल-मध्यस्थं शोभितं नन्दनन्दनम् ॥ १ ॥

## जपार्थे श्रीनाममाला-ग्रहणमंत्रः

अविघ्नं कुरु माले ! त्वं हरिनामजपेषु च ।
श्रीराधाकृष्णयोर्दास्यं देहि माले ! तु प्रार्थये ॥ १ ॥

नाम चिन्तामणिरूपं नामैव परमा गतिः ।
नाम्नः परतरं नास्ति तस्मान्नाम उपास्महे ॥ २ ॥

## श्रीनामजप-समर्पणमंत्रः

नामयज्ञो महायज्ञः कलौ कल्मषनाशनः ।
कृष्णचैतन्य-प्रीत्यर्थे नामयज्ञ-समर्पणम् ॥ १ ॥

### जपान्ते श्रीनाममाला-स्थापनमंत्रः

पतितपावनं नाम निस्तारय नराधमम् ।
राधाकृष्णस्वरूपाय चैतन्याय नमो नमः ॥ १ ॥

त्वं माले ! सर्वदेवानां सर्वसिद्धिप्रदा मता ।
तेन सत्येन मे सिद्धिं देहि मातर्नमोऽस्तु ते ॥ २ ॥

## श्रीशिक्षाष्टकम् ।

चेतोदर्पणमार्जनं भवमहादावाग्निनिर्वापणं
श्रेयःकैरवचन्द्रिकावितरणं विद्यावधूजीवनम् ।
आनन्दाम्बुधिवर्धनं प्रतिपदं पूर्णामृतास्वादनं
सर्वात्मस्नपनं परं विजयते श्रीकृष्णसंकीर्तनम् ॥ १ ॥

नाम्नामकारि बहुधा निजसर्वशक्ति-
स्तत्रार्पिता नियमितः स्मरणे न कालः ।
एतादृशी तव कृपा भगवन्ममापि
दुर्दैवमीदृशमिहाजनि नानुरागः ॥ २ ॥

तृणादपि सुनीचेन तरोरपि सहिष्णुना ।
अमानिना मानदेन कीर्तनीयः सदा हरिः ॥ ३ ॥

न धनं न जनं न सुन्दरीं कवितां वा जगदीश कामये ।
मम जन्मनि जन्मनीश्वरे भवताद्भक्तिरहैतुकी त्वयि॥ ४ ॥

अयि नन्दतनूज किंकरं पतितं मां विषमे भवांबुधौ ।
कृपया तव पादपंकजस्थितधूलीसदृशं विचिन्तय ॥ ५ ॥

नयनं गलदश्रुधारया वदनं गद्गदरुद्धया गिरा ।
पुलकैर्निचितं वपुः कदा तव नाम ग्रहणे भविष्यति॥ ६ ॥

युगायितं निमेषेण चक्षुषा प्रावृषायितम् ।
शून्यायितं जगत्सर्वं गोविन्दविरहेण मे ॥ ७ ॥

आश्लिष्य वा पादरतां पिनष्टु मा-
मदर्शनान्मर्महतां करोतु वा ।
यथा तथा वा विदधातु लंपटो
मत्प्राणनाथस्तु स एव नापरः ॥ ८ ॥

इति श्रीकृष्णचैतन्यमहाप्रभोःश्रीमुखाब्जविगलितं श्रीशिक्षाष्टकं संपूर्णम् ॥

## श्रीगुरुदेवाष्टकम् ।

संसार–दावानल–लीढ–लोक–
त्राणाय कारुण्य–घनाघनत्वम् ।
प्राप्तस्य कल्याण–गुणार्णवस्य
वन्दे गुरोः श्रीचरणारविन्दम् ॥ १ ॥

महाप्रभोः कीर्तन–नृत्य–गीत–
वादित्र–माद्यन्मनसो रसेन ।
रोमाञ्च–कम्पाश्रु–तरङ्गभाजो
वन्दे गुरोः श्रीचरणारविन्दम् ॥ २ ॥

श्रीविग्रहाराधन–नित्य–नाना–
शृङ्गार–तन्मदिर–मार्जनादौ ।
युक्तस्य भक्तांश्च नियुञ्जतोऽपि
वन्दे गुरोः श्रीचरणारविन्दम् ॥ ३ ॥

चतुर्विध–श्रीभगवत्–प्रसाद–
स्वाद्वन्न–तृप्तान् हरिभक्त–सङ्घान् ।

कृत्वैव तृप्तिं भजतः सदैव
वन्दे गुरोः श्रीचरणारविन्दम् ॥ ४ ॥

श्रीराधिका-माधवयोरपार
माधुर्य - लीला - गुण - रूप - नाम्नाम् ।
प्रतिक्षणा-स्वादन-लोलुपस्य
वन्दे गुरोः श्रीचरणारविन्दम् ॥ ५ ॥

निकुञ्ज-यूनो रति-केलि-सिद्धयै
या यालिभिर्युक्तिरपेक्षणीया ।
तत्राति-दाक्ष्यादति-वल्लभस्य
वन्दे गुरोः श्रीचरणारविन्दम् ॥ ६ ॥

साक्षाद्धरित्वेन समस्त-शास्त्रै-
रुक्तस्तथा भाव्यत एव सद्भिः ।
किन्तु प्रभोर्यः प्रिय एव तस्य
वन्दे गुरोः श्रीचरणारविन्दम् ॥ ७ ॥

यस्य प्रसादाद् भगवत्प्रसादो
यस्याप्रसादान्न गतिः कुतोऽपि ।
ध्यायंस्तुवंस्तस्य यशस्त्रिसन्ध्यं
वन्दे गुरोः श्रीचरणारविन्दम् ॥ ८ ॥

श्रीमद् गुरोरष्टकमेतदुच्चै-
र्ब्राह्मे मुहूर्ते पठति प्रयत्नात् ।
यस्तेन वृन्दावन-नाथ-साक्षात्-
सेवैव लभ्या जनुषोऽन्त एव ॥ ९ ॥

इति श्रीमद्विश्वनाथचक्रवर्तिठक्कुरविरचितस्तवामृतलहर्यां
श्रीगुरुदेवाष्टकं सम्पूर्णम् ।

# श्रीप्रभुपादपद्मस्तवकः ।

सुजनार्बुदराधितपादयुगं युगधर्मधुरन्धर-पात्रवरम् ।
वरदाभयदायक-पूज्यपदं प्रणमामि सदा प्रभुपादपदम् ॥ १ ॥

भजनोर्जितसज्जनसंघपतिं पतिताधिककारुणिकैकगतिम् ।
गतिवञ्चितवञ्चकाचिन्त्यपदं प्रणमामि सदा प्रभुपादपदम् ॥ २ ॥

अतिकोमलकाञ्चनदीर्घतनुं तनुनिन्दितहेममृणालमदम् ।
मदनार्बुदवन्दितचन्द्रपदं प्रणमामि सदा प्रभुपादपदम् ॥ ३ ॥

निजसेवकतारकरञ्जिविधुं विधुताहित-हुंकृतसिंहवरम् ।
वरणागतबालिश-शन्दपदं प्रणमामि सदा प्रभुपादपदम् ॥ ४ ॥

विपुलीकृतवैभवगौरभुवं भुवनेषु विकीर्तित-गौरदयम् ।
दयनीयगणार्पित-गौरपदं प्रणमामि सदा प्रभुपादपदम् ॥ ५ ॥

चिरगौरजनाश्रयविश्वगुरुं गुरुगौरकिशोरकदास्यपरम् ।
परमादृतभक्तिविनोदपदं प्रणमामि सदा प्रभुपादपदम् ॥ ६ ॥

रघुरूपसनातनकीर्तिधरं धरणीतलकीर्तितजीवकविम् ।
कविराज-नरोत्तमसख्यपदं प्रणमामि सदा प्रभुपादपदम् ॥ ७ ॥

कृपया हरिकीर्तनमूर्तिधरं धरणीभरहारक-गौरजनम् ।
जनकाधिकवत्सलस्निग्धपदं प्रणमामि सदा प्रभुपादपदम् ॥ ८ ॥

शरणागतकिङ्करकल्पतरुं तरुधिक्कृतधीरवदान्यवरम् ।
वरदेन्द्रगणार्चितदिव्यपदं प्रणमामि सदा प्रभुपादपदम् ॥ ९ ॥

परहंसवरं परमार्थपतिं पतितोद्धरणे कृतवेशयतिम् ।
यतिराजगणैः परिसेव्यपदं प्रणमामि सदा प्रभुपादपदम् ॥ १० ॥

वृषभानुसुतादयितानुचरं चरणाश्रित-रेणुधरस्तमहम् ।
महदद्भुतपावनशक्तिपदं प्रणमामि सदा प्रभुपादपदम् ॥ ११॥

इति त्रिदण्डिपाद श्रीभक्तिरक्षक-श्रीधर-महाराज-विरचितं
श्रीप्रभुपाद ( ॐ विष्णुपाद-परमहंस-१०८ श्री-श्रीमद्‌भक्तिसिद्धान्त-
सरस्वती-गोस्वामि-प्रभुपाद ) पद्मस्तवकः समाप्तः ।

## श्रीनित्यानन्दाष्टकम् ।

शरच्चन्द्र-भ्रान्तिं स्फुरदमल-कान्तिं गजगतिं
हरि-प्रेमोन्मत्तं धृत-परम-सत्त्वं स्मितमुखम् ।
सदा घूर्णन्नेत्रं कर-कलित-वेत्रं कलिभिदं
भजे नित्यानन्दं भजन-तरु-कन्दं निरवधि ॥ १ ॥

रसानामागारं स्वजनगण-सर्वस्वमतुलं
तदीयैक-प्राणप्रतिम-वसुधा-जाह्नवा-पतिम् ।
सदा प्रेमोन्मादं परमविदितं मन्द-मनसां
भजे नित्यानन्दं भजन-तरु-कन्दं निरवधि ॥ २ ॥

शचीसूनु-प्रेष्ठं निखिल-जगदिष्टं सुखमयं
कलौ मज्जज्जीवोद्धरण-करणोद्दाम-करुणम् ।
हरेराख्यानाद्वा भव-जलधि-गर्वोन्नति-हरं
भजे नित्यानन्दं भजन-तरु-कन्दं निरवधि ॥ ३ ॥

अये भ्रातर्नृणां कलि-कलुषिणां किन्नु भविता
तथा प्रायश्चित्तं रचय यदनायासत इमे ।
व्रजन्ति त्वामित्थं सह भगवता मंत्रयति यो
भजे नित्यानन्दं भजन-तरु-कन्दं निरवधि ॥ ४ ॥

यथेष्टं रे भ्रातः! कुरु हरिहरि-ध्वानमनिशं
ततो वः संसाराम्बुधि-तरण-दायो मयि लगेत् ।
इदं बाहु-स्फोटैरटति रटयन् यः प्रतिगृहं
भजे नित्यानन्दं भजन-तरु-कन्दं निरवधि ॥ ५ ॥

बलात् संसाराम्भोनिधि-हरण-कुम्भोद्भवमहो
सतां श्रेयः-सिन्धून्नति-कुमुद-बन्धुं समुदितम् ।
खलश्रेणी-स्फूर्जत्तिमिर-हर-सूर्य-प्रभमहं
भजे नित्यानन्दं भजन-तरु-कन्दं-निरवधि ॥ ६ ॥

नटन्तं गायन्तं हरिमनुवदन्तं पथि पथि
व्रजन्तं पश्यन्तं स्वमपि नदयन्तं जनगणम् ।
प्रकुर्वन्तं सन्तं सकरुण-दृगन्तः प्रकलनाद्-
भजे नित्यानन्दं भजन-तरु-कन्दं निरवधि ॥ ७ ॥

सुबिभ्राणं भ्रातुः कर-सरसिजं कोमलतरं
मिथो वक्त्रालोकोच्छलित-परमानन्दहृदयम् ।
भ्रमन्तं माधुर्यैरहह! मदयन्तं पुरजनान्
भजे नित्यानन्दं भजन-तरु-कन्दं निरवधि ॥ ८ ॥

रसानामाधारं रसिक-वर-सद्वैष्णव-धनं
रसागारं सारं पतित-ततितारं-स्मरणतः ।
परं नित्यानन्दाष्टकमिदमपूर्वं पठति य-
स्तदंघ्रिद्वन्द्वाब्जं स्फुरतु नितरां तस्य हृदये ॥ ९ ॥

इति श्रीमद्वृन्दावनदास-ठक्कुर-विरचितं
श्रीनित्यानन्दाष्टकं संपूर्णम् ।

## श्रीअद्वैताष्टकम् ।

गङ्गातीरे तत्पयोभिस्तुलस्याः
पत्रैः पुष्पैः प्रेमहुङ्कार-घोषैः ।
प्राकट्यार्थं गौरमाराधयद् यः
श्रीलाद्वैताचार्यमेतं प्रपद्ये ॥ १ ॥

यद्धुङ्कारैः प्रेमसिन्धोर्विकारै-
राकृष्टः सन् गौर-गोलोकनाथः ।
आविर्भूतः श्रीनवद्वीप-मध्ये
श्रीलाद्वैताचार्यमेतं प्रपद्ये ॥ २ ॥

ब्रह्मादीनां दुर्लभ-प्रेम-पूरै-
रादीनं यः प्लावयामास लोकम् ।
आविर्भाव्य श्रील-चैतन्यचन्द्रं
श्रीलाद्वैताचार्यमेतं प्रपद्ये ॥ ३ ॥

श्रीचैतन्यः सर्वशक्ति-प्रपूर्णो
यस्यैवाज्ञामात्रतोऽन्तर्दधेऽपि ।
दुर्विज्ञेयं यस्य कारुण्य-कृत्यं
श्रीलाद्वैताचार्यमेतं प्रपद्ये ॥ ४ ॥

सृष्टि-स्थित्यन्तं विधातुं प्रवृत्ताः
यस्यांशांशाः ब्रह्म-विष्णवीश्वराख्याः ।
येनाभिन्नं तं महाविष्णु-रूपं
श्रीलाद्वैताचार्यमेतं प्रपद्ये ॥ ५ ॥

कस्मिंश्चिद् यः यते चाश्रयत्वात्
शंभोरित्थं शांभवन्नाम धाम ।

सर्वाराध्यं भक्तिमात्रैक-साध्यं
श्रीलाद्वैताचार्यमेतं प्रपद्ये ॥ ६ ॥

सीता-नाम्नी प्रेयसी प्रेमपूर्णा
पुत्रो यस्याप्यच्युतानन्द-नामा ।
श्रीचैतन्य - प्रेमपूर - प्रपूर्णः
श्रीलाद्वैताचार्यमेतं प्रपद्ये ॥ ७ ॥

नित्यानन्दाद्वैततोऽद्वैत-नामा
भक्त्याख्यानाद् यः सदाचार्य-नामा ।
शश्वच्चेतः-सञ्चरद्गौरधामा
श्रीलाद्वैताचार्यमेतं प्रपद्ये ॥ ८ ॥

प्रातः प्रीतः प्रत्यहं संपठेद् यः
सीतानाथस्याष्टकं शुद्ध-बुद्धिः ।
सोऽयं सम्यक् तस्य पादारविन्दे
विन्दन् भक्तिं तत्-प्रियत्वं प्रयाति ॥ ९ ॥

इति श्रीलसार्वभौमभट्टाचार्यविरचितं
श्रीश्रीअद्वैताष्टकं संपूर्णम् ।

## श्रीगदाधराष्टकम् ।

स्वभक्तियोग-लासिनं सदा व्रजे विहारिणं
हरि - प्रिया - गणाग्रगं शचीसुत - प्रियेश्वरम् ।
सराध - कृष्णसेवन - प्रकाशकं महाशयं
भजाम्यहं गदाधरं सुपण्डितं गुरुं प्रभुम् ॥ १ ॥

नवोज्ज्वलादि-भावना-विधान-कर्म पारगं
विचित्र-गौरभक्तिसिन्धु-रङ्गभङ्ग-लासिनम् ।

सुराग–मार्गदर्शकं व्रजादि–वास–दायकं
भजाम्यहं गदाधरं सुपण्डितं गुरुं प्रभुम् ॥ २ ॥

शचीसुतांघ्रिसारभक्तवृन्द - वन्द्य - गौरवं
गौरभाव - चित्तपद्म – मध्य – कृष्ण – वल्लभम् ।
मुकुन्द - गौररूपिणं स्वभाव धर्म - दायकं
भजाम्यहं गदाधरं सुपण्डितं गुरुं प्रभुम् ॥ ३ ॥

निकुञ्ज–सेवनादिक–प्रकाशनैक–कारणं
सदा सखीरति–प्रदं महारस स्वरूपकम् ।
सदाश्रितांघ्रि–पंकजं शरीरि–सद्‌गुरुं वरं
भजाम्यहं गदाधरं सुपण्डितं गुरुं प्रभुम् ॥ ४ ॥

महाप्रभोर्महारस–प्रकाशनांकुरं प्रियं
सदा महारसांकुर – प्रकाशनादि – वासनाम् ।
महाप्रभोर्व्रजाङ्गनादि–भाव–मोद कारकं
भजाम्यहं गदाधरं सुपण्डितं गुरुं प्रभुम् ॥ ५ ॥

द्विजेन्द्र–वृन्द–वन्द्य–पादयुग्म–भक्तिवर्धकं
निजेषु राधिकात्मता - वपुः - प्रकाशनाग्रहम् ।
अशेष-भक्तिशास्त्र - शिक्षयोज्ज्वलामृत-प्रदं
भजाम्यहं गदाधरं सुपण्डितं गुरुं प्रभुम् ॥ ६ ॥

मुदा निजप्रियादिक-स्वपादपद्म-सीधुभि-
र्महारसार्णवामृत - प्रदेष्ट - गौरभक्तिदम् ।
सदाष्ट-सात्त्विकान्वितं निजेष्ट-भक्तिदायकं
भजाम्यहं गदाधरं सुपण्डितं गुरुं प्रभुम् ॥ ७ ॥

मदीय-रीतिराग-रङ्गभङ्ग-दिग्ध-मानसो
नरोऽपि याति तूर्णमेव नार्यभाव - भाजनम् ।

तमुज्ज्वलाक्त-चित्तमेतु चित्तमत्तषट्पदो
भजाम्यहं गदाधरं सुपण्डितं गुरुं प्रभुम् ॥ ८ ॥
महारसामृत - प्रदं सदा गदाधराष्टकं
पठेत्तु यः सुभक्तितो व्रजाङ्गनागणोत्सवम् ।
शचीतनूज - पादपद्म भक्तिरत्न - योग्यतां
लभेत राधिका - गदाधरांघ्रिपद्म - सेवया ॥ ९ ॥

इति श्रील–स्वरूपगोस्वामि–विरचितं
श्रीगदाधराष्टकं समाप्तम् ।

# श्रीगौर-गदाधरयुगलाष्टकम् ।

क्षितौ लुठद्गौर - कलेवराभ्यां
सदा महाप्रेम--विलासकाभ्याम् ।
समुद्रतीरे नट–नागराभ्यां
नमोऽस्तु मे गौर–गदाधराभ्याम् ॥ १ ॥

हाहा क्व राधेति मुहुः स्थिताभ्यां
श्रीराधिकाकृष्ण - वपुर्धराभ्याम् ।
आनन्द - लीलारस - रञ्जिताभ्यां
नमोऽस्तु मे गौर-गदाधराभ्याम् ॥ २ ॥

अद्वैत - चिन्ताहर - सम्भवाभ्यां
सदा भवानन्द - मनोहराभ्याम् ।
अचिन्त्य - लीला - परिपूरिताभ्यां
नमोऽस्तु मे गौर-गदाधराभ्याम् ॥ ३ ॥

जीवैक - निस्तार - धृतव्रताभ्यां
श्रीकृष्णनाम्ना–जन–तारकाभ्याम् ।
हरे हरे कृष्ण मुखाम्बुजाभ्यां
नमोऽस्तु मे गौर-गदाधराभ्याम् ॥ ४ ॥

अशेष दुःखामय – भेषजाभ्यां
किरीट - केयूर - विभूषिताभ्याम् ।
ग्रैवेय - माला - मणि - रञ्जिताभ्यां
नमोऽस्तु मे गौर-गदाधराभ्याम् ॥ ५ ॥

श्रीवत्स – रोमावलि – रञ्जिताभ्यां
वक्षःस्थले कौस्तुभ-भूषिताभ्याम् ।
त्रैलोक्य – सम्मोहन – सुन्दराभ्यां
नमोऽस्तु मे गौर-गदाधराभ्याम् ॥ ६ ॥

स्फुरच्चलत् – काञ्चन – कुण्डलाभ्यां
सदाष्टभावैः परिशोभिताभ्याम् ।
स्वेदाश्रु - कम्पादि - विभूषिताभ्यां
नमोऽस्तु मे गौर-गदाधराभ्याम् ॥ ७ ॥

श्रीमच्छिवानन्द – मनोरथाभ्यां
सदा सुखानन्द–रस–स्फुराभ्याम् ।
मदीय – सर्वस्व – पदाम्बुजाभ्यां
नमोऽस्तु मे गौर-गदाधराभ्याम् ॥ ८ ॥

पठन्ति ये गौर-गदाधराष्टकं
पद्यं लभन्ते व्रजयुग्म–पादम् ।
अद्वैतपुत्रेण मयोक्तमेत–
न्नाम्नाच्युतानन्द-जनेन धीमता ॥ ९ ॥

इति श्रीमदच्युतानन्द–गोस्वामि–विरचितं
श्रीगौर–गदाधरयुगलाष्टकं सम्पूर्णम् ।

# श्रीश्रीवासाष्टकम् ।

आश्रयामि श्रीश्रीवासं तमाद्यं पण्डितं मुदा ।
शुक्लाम्बरधरं गौरं गौरभक्ति - प्रदायकम् ॥ १ ॥

श्रीगौरस्य नवद्वीप - लीला - संकीर्तन - सम्पदि ।
यः प्रधानतया ख्यातः स श्रीवासो गतिर्मम ॥ २ ॥

श्रीगौरकीर्तनानन्दे पुत्रशोकोऽपि नास्पृशत् ।
यं श्रीवासं भक्तराजं तं नमामि पुनःपुनः ॥ ३ ॥

आदौ वासस्तु श्रीहट्टे भागीरथ्यास्तटे ततः ।
कुमारहट्टे यस्यासीत् स मे गौरगतिर्गतिः ॥ ४ ॥

श्रीरामः श्रीपतिश्चैव श्रीनिधिश्चेति सत्तमाः ।
श्रीवास-भ्रातरो ज्ञेयाः श्रीवासं नौमि तद्वरम् ॥ ५ ॥

पुरा नारद-रूपेण हरिनाम-सुधा-झरैः ।
यो जगत् प्लावयामास स श्रीवासोऽधुना गतिः ॥ ६ ॥

यत्पत्नी मालिनीदेवी श्रीगौराङ्गमतोषयत् ।
स्वहस्तपक्व-भक्ताद्यैः स श्रीवासो गतिर्मम ॥ ७ ॥

पतिवद्गौराङ्गगतिर्मालिनी गौडविश्रुता ।
तत्पादपद्म-सविधे प्रणतिर्मे सहस्रशः ॥ ८ ॥

श्रीचैतन्य-प्रियतमं वन्दे श्रीवासपण्डितम् ।
यत्कारुण्य-कटाक्षेण श्रीगौराङ्गे रतिर्भवेत् ॥ ९ ॥

इति श्रीश्रीवासाष्टकं सम्पूर्णम् ।

# श्रीलोकनाथ-प्रभुवराष्टकम् ।

यः कृष्णचैतन्य-कृपैकवित्त-
स्ततप्रेम - हेमाभरणाढ्य - चित्तः ।
निपत्य भूमौ सततं नमाम-
स्तं लोकनाथं प्रभुमाश्रयामः ॥ १ ॥

यो लब्ध-वृन्दावन-नित्यवासः
परिस्फुरत्कृष्णविलासरासः ।
स्वाचार-चर्या-सतताविराम-
स्तं लोकनाथं प्रभुमाश्रयामः ॥ २ ॥

सदोल्लसद्भागवतानुरक्त्या
यः कृष्णराधा-श्रवणादि-भक्त्या ।
अयातयामीकृत - सर्वयाम -
स्तं लोकनाथं प्रभुमाश्रयामः ॥ ३ ॥

वृन्दावनाधीश-पदाब्जसेवा -
स्वादेऽनुमज्जन्ति न हन्त ! के वा ।
यस्तेष्वपि श्लाघ्यतमोऽभिराम-
स्तं लोकनाथं प्रभुमाश्रयामः ॥ ४ ॥

यः कृष्णलीलारस एव लोकान्-
अनुन्मुखान् वीक्ष्य बिभर्ति शोकान् ।
स्वयं तदास्वादन-मात्र-काम-
स्तं लोकनाथं प्रभुमाश्रयामः ॥ ५ ॥

कृपाबलं यस्य विवेद कश्चित्
नरोत्तमो नाम महान् विपश्चित् ।

यस्य प्रथीयान् विषयोपराम-
　　स्तं लोकनाथं प्रभुमाश्रयामः ॥ ६ ॥

रागानुगावर्त्मनि यत्प्रसादाद्-
　　विशन्त्यविज्ञा अपि निर्विषादाः ।
जने कृतागस्यपि यस्त्ववाम -
　　स्तं लोकनाथं प्रभुमाश्रयामः ॥ ७ ॥

यद्दास-दासानुगदास-दासाः
　　वयं भवामः फलिताभिलाषाः ।
यदीयतायां सहसा विशाम-
　　स्तं लोकनाथं प्रभुमाश्रयामः ॥ ८ ॥

श्रीलोकनाथाष्टकमत्युदारं
　　भक्त्या पठेद् यः पुरुषार्थसारम् ।
स मञ्जुलाली पदवीं प्रपद्य
　　श्रीराधिकां सेवत एव सद्यः ॥ ९ ॥

सोऽयं श्रीलोकनाथः स्फुरतु पुरुकृपा-रश्मिभिः स्वैः समुद्यन्-
नुद्धृत्योद्धृत्य यो नः प्रचुरतम–तमः कूपतो दीपिताभिः ।
दृग्भिः स्वप्रेमवीथ्या दिशमदिशदहो यां श्रिता दिव्यलीला-
रत्नाढ्यं विन्दमाना वयमपि निभृतं श्रीलगोवर्धनं स्मः ॥१०॥

इति श्रीविश्वनाथ–चक्रवर्ति–ठक्कुर–विरचित–स्तवामृतलहर्यां
श्रीलोकनाथ–प्रभुवराष्टकं सम्पूर्णम् ।

# श्रीषड् गोस्वाम्यष्टकम् ।

कृष्णोत्कीर्तन-गान-नर्तन-परौ प्रेमामृताम्भोनिधी
धीराधीरजन-प्रियौ प्रियकरौ निर्मत्सरौ पूजितौ ।
श्रीचैतन्य-कृपाभरौ भुवि भुवो भारावहन्तारकौ
वन्दे रूप-सनातनौ रघुयुगौ श्रीजीव-गोपालकौ ॥ १ ॥

नानाशास्त्र-विचारणैक-निपुणौ सद्धर्म-संस्थापकौ
लोकानां हितकारिणौ त्रिभुवने मान्यौ शरण्याकरौ ।
राधाकृष्ण-पदारविन्द-भजनानन्देन मत्तालिकौ
वन्दे रूप-सनातनौ रघुयुगौ श्रीजीव-गोपालकौ ॥ २ ॥

श्रीगौराङ्ग-गुणानुवर्णन-विधौ श्रद्धा-समृद्ध्यन्वितौ
पापोत्ताप-निकृन्तनौ तनुभृतां गोविन्द-गानामृतैः ।
आनन्दाम्बुधि-वर्धनैक-निपुणौ कैवल्य-निस्तारकौ
वन्दे रूप-सनातनौ रघुयुगौ श्रीजीव-गोपालकौ ॥ ३ ॥

त्यक्त्वा तूर्णमशेष-मण्डलपति-श्रेणीं सदा तुच्छवत्
भूत्वा दीन-गणेशकौ करुणया कौपीन-कन्थाश्रितौ ।
गोपीभाव-रसामृताब्धि-लहरी-कल्लोल-मग्नौ मुहु-
र्वन्दे रूप-सनातनौ रघुयुगौ श्रीजीव-गोपालकौ ॥ ४ ॥

कूजत्-कोकिल-हंस-सारस-गणाकीर्णे मयूराकुले
नानारत्न-निबद्ध-मूल-विटप-श्रीयुक्त-वृन्दावने ।
राधाकृष्णमहर्निशं प्रभजतौ जीवार्थदौ यौ मुदा
वन्दे रूप-सनातनौ रघुयुगौ श्रीजीव-गोपालकौ ॥ ५ ॥

संख्यापूर्वक-नामगाननतिभिः कालावसानीकृतौ
निद्राहार-विहारकादि-विजितौ चात्यन्त-दीनौ च यौ ।
राधाकृष्ण - गुणस्मृतेर्मधुरिमानन्देन सम्मोहितौ
वन्दे रूप - सनातनौ रघुयुगौ श्रीजीव-गोपालकौ ॥ ६ ॥

राधाकुण्ड-तटे कलिन्द-तनया-तीरे च वंशीवटे
प्रेमोन्माद-वशादशेष-दशया ग्रस्तौ प्रमत्तौ सदा ।
गायन्तौ च कदा हरेर्गुणवरं भावाभिभूतौ मुदा
वन्दे रूप-सनातनौ रघुयुगौ श्रीजीव-गोपालकौ ॥ ७ ॥

हे राधे व्रजदेविके च ललिते हे नन्दसूनो कुतः
श्रीगोवर्धन-कल्पपादप-तले कालिन्दीवन्ये कुतः ।
घोषन्ताविति सर्वतो व्रजपुरे खेदैर्महाविह्वलौ
वन्दे रूप-सनातनौ रघुयुगौ श्रीजीव-गोपालकौ ॥ ८ ॥

इति श्रीश्रीनिवासाचार्यप्रभु-विरचितं
श्रीषड् गोस्वामि-गुणलेशसूचकाष्टकं संपूर्णम् ।

## श्रीनरोत्तम-प्रभोरष्टकम् ।

श्रीकृष्णनामामृतवर्षिवक्त्र-
चन्द्रप्रभा-ध्वस्त-तमोभराय ।
गौराङ्ग-देवानुचराय तस्मै
नमो नमः श्रील-नरोत्तमाय ॥ १ ॥

संकीर्तनानन्दज-मन्दहास्य
दन्तद्युति-द्योतित-दिङ्मुखाय ।
स्वेदाश्रुधारा-स्नपिताय तस्मै
नमो नमः श्रील-नरोत्तमाय ॥ २ ॥

मृदङ्ग-नाम-श्रुतिमात्र-चञ्चत्-
पदाम्बुज-द्वन्द्व-मनोहराय ।
सद्यः समुद्यत्-पुलकाय तस्मै
नमो नमः श्रील-नरोत्तमाय ॥ ३ ॥

गन्धर्व-गर्व-क्षपण-स्वलास्य-
विस्मापिताशेष-कृति-व्रजाय ।
स्वसृष्ट-गान-प्रथिताय तस्मै
नमो नमः श्रील-नरोत्तमाय ॥ ४ ॥

आनन्द-मूर्च्छावनिपात-भात
धूली-भरालंकृत-विग्रहाय ।
यद्‌दर्शनं भाग्य-भरेण तस्मै
नमो नमः श्रील-नरोत्तमाय ॥ ५ ॥

स्थले स्थले यस्य कृपा-प्रपाभिः
कृष्णान्यतृष्णा जन-संहतीनाम् ।
निर्मूलिता एव भवन्ति तस्मै
नमो नमः श्रील-नरोत्तमाय ॥ ६ ॥

यद्भक्ति-निष्ठोपल-रेखिकेव
स्पर्शः पुनः स्पर्शमणीव यस्य ।
प्रामाण्यमेवं श्रुतिवद् यदीयं
तस्मै नमः श्रील-नरोत्तमाय ॥ ७ ॥

मूर्तैव भक्तिः किमयं किमेष
वैराग्यसारस्तनुमान् नृलोके ।
संभाव्यते यः कृतिभिः सदैव
तस्मै नमः श्रील-नरोत्तमाय ॥ ८ ॥

राजन्मृदङ्ग-करताल-कलाभिरामं
गौराङ्ग-गानमधु-पानभराभिरामम् ।
श्रीमन्नरोत्तम-पदाम्बुज-मंजु-नृत्यं
भृत्यं कृतार्थयतु मां फलितेष्टकृत्यम् ॥ ९ ॥

इति श्रीविश्वनाथ-चक्रवर्ति-ठक्कुर-विरचित-स्तवामृतलहर्यां
श्रीनरोत्तम-प्रभोरष्टकं संपूर्णम् ।

# श्रीचैतन्याष्टकम् (१) ।

सदोपास्यः श्रीमान् धृत–मनुज–कायैः प्रणयितां
बहद्भिर्गीर्वाणैर्गिरिश – परमेष्ठिप्रभृतिभिः ।
स्वभक्तेभ्यः शुद्धां निज–भजन–मुद्रामुपदिशन्
स चैतन्यः किं मे पुनरपि दृशोर्यास्यति पदम् ॥ १ ॥

सुरेशानां दुर्गं गतिरतिशयेनोपनिषदां
मुनीनां सर्वस्वं प्रणतपटलीनां मधुरिमा ।
विनिर्यासः प्रेम्णो निखिल–पशुपालाम्बुज–दृशां
स चैतन्यः किं मे पुनरपि दृशोर्यास्यति पदम् ॥ २ ॥

स्वरूपं बिभ्राणो जगदतुलमद्वैत – दयितः
प्रपन्न – श्रीवासो जनित – परमानन्द–गरिमा ।
हरिर्दीनोद्धारी गजपति – कृपोत्सेक – तरलः
स चैतन्यः किं मे पुनरपि दृशोर्यास्यति पदम् ॥ ३ ॥

रसोद्दामा कामार्बुद–मधुर–धामोज्ज्वल–तनु-
र्यतीनामुत्तंसस्तरणि – कर – विद्योति – वसनः ।
हिरण्यानां लक्ष्मीभरमभिभवन्नाङ्गिक – रुचा
स चैतन्यः किं मे पुनरपि दृशोर्यास्यति पदम् ॥ ४ ॥

हरे कृष्णेत्युच्चैः स्फुरित–रसनो नामगणना-
कृत–ग्रन्थिश्रेणी - सुभग - कटिसूत्रोज्ज्वल - करः ।
विशालाक्षो दीर्घार्गल - युगल - खेलाञ्चित - भुजः
स चैतन्यः किं मे पुनरपि दृशोर्यास्यति पदम् ॥ ५ ॥

पयोराशेस्तीरे स्फुरदुपवनाली – कलनया
मुहुर्वृन्दारण्य - स्मरण - जनित - प्रेम - विवशः ।

क्वचित् कृष्णावृत्ति-प्रचल-रसनो भक्ति - रसिकः
स चैतन्यः किं मे पुनरपि दृशोर्यास्यति पदम् ॥ ६ ॥

रथारूढस्यारादधिपदवि नीलाचल - पते-
रदभ्र - प्रेमोर्मि - स्फुरित - नटनोल्लास - विवशः ।
सहर्षं गायद्भिः परिवृत - तनुर्वैष्णव - जनैः
स चैतन्यः किं मे पुनरपि दृशोर्यास्यति पदम् ॥ ७ ॥

भुवं सिञ्चन्नश्रु - स्त्रुतिभिरभितः सान्द्र - पुलकैः
परीताङ्गो नीप - स्तवक - नव - किञ्जल्क-जयिभिः ।
घन - स्वेद - स्तोम - स्तिमित - तनुरुत्कीर्तन-सुखी
स चैतन्यः किं मे पुनरपि दृशोर्यास्यति पदम् ॥ ८ ॥

अधीते गौराङ्ग - स्मरण - पदवी - मङ्गलतरं
कृती यो विश्रम्भ - स्फुरदमलधीरष्टकमिदम् ।
परानन्दे सद्यस्तदमल - पदाम्भोज - युगले
परिस्फारा तस्य स्फुरतु नितरां प्रेमलहरी ॥ ९ ॥

इति श्रीमद्रूपगोस्वामिविरचित-स्तवमालायां
श्रीचैतन्याष्टकं ( १ ) संपूर्णम् ।

## श्रीचैतन्याष्टकम् (२) ।

कलौ यं विद्वांसः स्फुटमभियजन्ते द्युतिभरा-
दकृष्णाङ्गं कृष्णं मखविधिभिरुत्कीर्तनमयैः ।
उपास्यं च प्राहुर्यमखिल–चतुर्थाश्रमजुषां
स देवश्चैतन्याकृतिरतितरां नः कृपयतु ॥ १ ॥

चरित्रं तन्वानः प्रियमघवदाह्लादन–पदं
जयोद्‌घोषैः सम्यग्विरचित–शची–शोकहरणः ।

उदञ्चन्मार्तण्ड-द्युतिहर-दुकूलाञ्चित-कटिः
स देवश्चैतन्याकृतिरतितरां नः कृपयतु ॥ २ ॥

अपारं कस्यापि प्रणयि-जन-वृन्दस्य कुतुकी
रसस्तोमं हृत्वा मधुरमुपभोक्तुं कमपि यः ।
रुचिं स्वामावव्रे द्युतिमिह तदीयां प्रकटयन्
स देवश्चैतन्याकृतिरतितरां नः कृपयतु ॥ ३ ॥

अनाराध्यः प्रीत्या चिरमसुर-भाव-प्रणयिनां
प्रपन्नानां दैवीं प्रकृतिमधिदैवं त्रिजगति ।
अजस्रं यः श्रीमान् जयति सहजानन्द-मधुरः
स देवश्चैतन्याकृतिरतितरां नः कृपयतु ॥ ४ ॥

गतिर्यः पौण्ड्राणां प्रकटित-नवद्वीप-महिमा
भवेनालंकुर्वन् भुवन-महितं श्रोत्रियकुलम् ।
पुनात्यङ्गीकाराद्भुवि परमहंसाश्रम-पदं
स देवश्चैतन्याकृतिरतितरां नः कृपयतु ॥ ५ ॥

मुखेनाग्रे पीत्वा मधुरमिह नामामृतरसं
दृशोर्द्वारा यस्तं वमति घन-बाष्पाम्बु-मिषतः ।
भुवि प्रेम्णस्तत्त्वं प्रकटयितुमुल्लासित-तनुः
स देवश्चैतन्याकृतिरतितरां नः कृपयतु ॥ ६ ॥

तनूमाविष्कुर्वन् नव-पुरट-भासं कटि-लसत्
करङ्कालङ्कारस्तरुण-गजराजाञ्चित-गतिः ।
प्रियेभ्यो यः शिक्षां दिशति निजनिर्माल्यरुचिभिः
स देवश्चैतन्याकृतिरतितरां नः कृपयतु ॥ ७ ॥

स्मितालोकः शोकं हरति जगतां यस्य परितो
गिरां तु प्रारम्भः कुशल-पटलीं पल्लवयति ।
पदालम्बः कं वा प्रणयति न हि प्रेम-निवहः
स देवश्चैतन्याकृतिरतितरां नः कृपयतु ॥ ८ ॥

शचीसूनोः कीर्ति-स्तबक-नवसौरभ्य-निबिडं
पुमान् यः प्रीतात्मा पठति किल पद्याष्टकमिदम् ।
स लक्ष्मीवानेतं निजपद-सरोजे प्रणयितां
ददानः कल्याणीमनुपदमबाधं सुखयतु ॥ ९ ॥

इति श्रीमद्रूपगोस्वामिविरचित-स्तवमालायां
श्रीचैतन्याष्टकं ( २ ) संपूर्णम् ।

# श्रीचैतन्याष्टकम् (३) ।

उपासितपदाम्बुजस्त्वमनुरक्तरुद्रादिभिः
प्रपद्य पुरुषोत्तमं पदमदभ्रमुद्भ्राजितः ।
समस्तनतमण्डलीस्फुरदभीष्टकल्पद्रुमः
शचीसुत मयि प्रभो कुरु मुकुन्द मन्दे कृपाम् ॥ १ ॥

न वर्णयितुमीशते गुरुतरावतारायिता
भवन्तमुरुबुद्धयो न खलु सार्वभौमादयः ।
परो भवनु तत्र कः पटुरतो नमस्ते परं
शचीसुत मयि प्रभो कुरु मुकुन्द मन्दे कृपाम् ॥ २ ॥

न यत् कथमपि श्रुतावुपनिषद्भिरप्याहितं
स्वयं च विवृतं न यद् गुरुतरावतारान्तरे ।
क्षिपन्नसि रसाम्बुधे तदिह भक्तिरत्नं क्षितौ
शचीसुत मयि प्रभो कुरु मुकुन्द मन्दे कृपाम् ॥ ३ ॥

निजप्रणयविस्फुरन्नटनरङ्ग–विस्मापित–
त्रिनेत्र　　नतमण्डलप्रकटितानुरागामृत ।
अहंकृतिकलङ्कितोद्धतजनादिदुर्बोध हे
शचीसुत मयि प्रभो कुरु मुकुन्द मन्दे कृपाम् ॥ ४ ॥

भवन्ति भुवि ये नराः कलितदुष्कुलोत्पत्तय–
स्त्वमुद्धरसि तानपि प्रचुरचारुकारुण्यतः ।
इति प्रमुदितान्तरः शरणमाश्रितस्त्वामहं
शचीसुत मयि प्रभो कुरु मुकुन्द मन्दे कृपाम् ॥ ५ ॥

मुखाम्बुजपरिस्खलन्मृदुलवाङ्मधूलीरस-
प्रसङ्गजनिताखिलप्रणतभृङ्गरङ्गोत्कर ।
समस्तजनमङ्गलप्रभवनामरत्नाम्बुधे
शचीसुत मयि प्रभो कुरु मुकुन्द मन्दे कृपाम् ॥ ६ ॥

मृगाङ्कमधुरानन–स्फुरदनिद्रपद्मेक्षण
स्मितस्तबकसुन्दराधर　　विशङ्कटोरस्तट ।
भुजोद्धतभुजङ्गमप्रभ मनोजकोटिद्युते
शचीसुत मयि प्रभो कुरु मुकुन्द मन्दे कृपाम् ॥ ७ ॥

अहं कनककेतकीकुसुमगौर दुष्टः क्षितौ
न दोषलवदर्शिता विविधदोषपूर्णेऽपि ते ।
अतः प्रवणया धिया कृपणवत्सल त्वां भजे
शचीसुत मयि प्रभो कुरु मुकुन्द मन्दे कृपाम् ॥ ८ ॥

इदं धरणिमण्डलोत्सव भवत्पदांकेषु ये
निविष्टमनसो नराः परिपठन्ति पद्याष्टकम् ।
शचीहृदयनन्दन प्रकटकीर्तिचन्द्र प्रभो
निजप्रणयनिर्भरं वितर देव तेभ्यः शुभम् ॥ ९ ॥

इति श्रीमद्रूपगोस्वामिविरचित-स्तवमालायां
श्रीचैतन्याष्टकं ( ३ ) संपूर्णम् ।

# श्रीशचीसून्वष्टकम् ।

हरिर्दृष्ट्वा गोष्ठे मुकुर-गतमात्मानमतुलं
स्वमाधुर्यं राधा-प्रियतर-सखीवाप्तुमभितः ।
अहो गौडे जातः प्रभुरपरगौरैकतनुभाक्
शचीसूनुः किं मे नयनशरणीं यास्यति पुनः ॥ १ ॥

पुरीदेवस्यान्तः-प्रणय-मधुना स्नान-मधुरो
मुहुर्गोविन्दोद्यद्विशद-परिचर्यार्चित-पदः ।
स्वरूपस्य प्राणार्बुद-कमल-नीराजित-मुखः
शचीसूनुः किं मे नयनशरणीं यास्यति पुनः ॥ २ ॥

दधानः कौपीनं तदुपरि बहिर्वस्त्रमरुणं
प्रकाण्डो हेमाद्रि-द्युतिभिरभितः सेवित-तनुः ।
मुदा गायन्नुच्चैर्निज-मधुर-नामावलिमसौ
शचीसूनुः किं मे नयनशरणीं यास्यति पुनः ॥ ३ ॥

अनावेद्यां पूर्वैरपि मुनिगणैर्भक्ति-निपुणैः
श्रुतेर्गूढां प्रेमोज्ज्वल-रसफलां भक्ति-लतिकाम् ।
कृपालुस्तां गौडे प्रभुरतिकृपाभिः प्रकटयन्
शचीसूनुः किं मे नयनशरणीं यास्यति पुनः ॥ ४ ॥

निजत्वे गौडीयान् जगति परिगृह्य प्रभुरिमान्
हरेकृष्णेत्येवं गणन-विधिना कीर्तयत भोः ।
इतिप्रायां शिक्षां जनक इव तेभ्यः परिदिशन्
शचीसूनुः किं मे नयनशरणीं यास्यति पुनः ॥ ५ ॥

पुरः पश्यन् नीलाचल-पतिमुरुप्रेम-निवहैः
क्षरन्नेत्राम्भोभिः स्नपित-निज-दीर्घोज्ज्वल-तनुः ।

सदा तिष्ठन् देशे प्रणयि–गरुडस्तम्भ–चरमे
शचीसूनुः किं मे नयनशरणीं यास्यति पुनः ॥ ६ ॥

मुदा दन्तैर्दष्ट्वा द्युति–विजित–बन्धूकमधरं
करं कृत्वा वामं कटिनिहितमन्यं परिलसन् ।
समुत्थाप्य प्रेम्णागणित–पुलको नृत्यकुतूकी
शचीसूनुः किं मे नयनशरणीं यास्यति पुनः ॥ ७ ॥

सरित्तीरारामे विरह–विधुरो गोकुलविधो-
र्नदीमन्यां कुर्वन्नयन–जलधारा–विततिभिः ।
मुहुर्मूर्च्छां गच्छन्मृतकमिव विश्वं विरचयन्
शचीसूनुः किं मे नयनशरणीं यास्यति पुनः ॥ ८ ॥

शचीसूनोरस्याष्टकमिदमभीष्टं विरचयत्
सदा दैन्योद्रेकादति–विशद–बुद्धिः पठति यः ।
प्रकामं चैतन्यः प्रभुरति–कृपावेश–विवशः
पृथु–प्रेमाम्भोधौ प्रथित–रसदे मज्जयति तम् ॥ ९ ॥

इति श्रीमद्रघुनाथ–दासगोस्वामि–विरचित-स्तवावल्यां
श्रीशचीसून्वष्टकं संपूर्णम् ।

## श्रीशचीनन्दनाष्टकम् ।

गोपीनां कुचकुंकुमेन निचितं वासः किमस्यारुणं
निन्दत्-काञ्चनकान्ति-रासरसिकाश्लेषेण गौरं वपुः ।
तासां गाढकराभिबन्धन–रसाल्लोमोद्गमो दृश्यते
आश्चर्यं सखि पश्य लम्पटगुरोः संन्यासिवेशं क्षितौ ॥ १ ॥

यः पूर्वं व्रजसुन्दरी–रतिरसैरुत्थापितः प्रत्यहं
कालिन्दीपुलिने ननर्त रभसात् श्रीरासगोष्ठ्यां विभुः ।
सोऽयं सम्प्रति सर्वलोक–निहित–प्रेमानुरागः कलौ
प्रेम्णा नृत्यति नर्तयत्यपि जगद्भूदेव–चूडामणिः ॥ २ ॥

वेदान्तागम–वेद–शास्त्र–पटली–दुर्गम्य–पादाम्बुजः
श्रीश्रीनन्दकिशोर–लास्य–लहरी–विद्योतकानुग्रहः ।
तत्काल-स्मृतिमात्र-तत्क्षण-चलत्-प्रेम-प्रवाहाम्बुधि-
भूदेवाङ्गण--मङ्गलो विजयते श्रीश्रीशचीनन्दनः ॥ ३ ॥

मोहोन्माद--रसेन गोप--वनिता--सिक्तेन वृन्दावनं
यः पूर्वं जगदेक--मङ्गलमलं चक्रे घनश्यामलः ।
सोऽयं गौरहरिः समस्त--जगतीं प्रेम्णा समुल्लासयन्
कारुण्यैक--निकेतनं विजयते गौडावनीमण्डले ॥ ४ ॥

नृत्यावेश--महोल्लसत्--सुमधुर--प्रत्यङ्ग--वेशोज्ज्वलं
श्रीखण्डागुरु-कुंकुमादि-सहितं श्रीमद्वृहद्वक्षसा ।
कर्पूरोद्भट--पूगपुञ्ज--विलसत्--प्रारक्त--बिम्बाधरं
श्रीचैतन्यमहाप्रभोर्विजयते लावण्यसारं वपुः ॥ ५ ॥

प्रतप्त–कनक–प्रभं विमल–पूर्णचन्द्राननं
गलन्नयन–वारिभिः सपदि सिक्त–भूमीतलम् ।
सगद्गद–गिरं मुदा सकल–देवचूडामणिं
शचीसुतमहं भजे करुणसागरं ईश्वरम् ॥ ६ ॥

कदम्ब–कुसुमोल्लसत्–पुलक–पुञ्ज–पुञ्जोज्ज्वलं
झलत्–झलदिति–स्खलन्नयन–वारिभिर्निर्झरम् ।
वयं दमदमायिते हृदि दर–स्फुरन्माधुरी
मधून्मद–महानटं किमपि धाम वन्दामहे ॥ ७ ॥

उच्चैर्लोल-भुजद्वयेन परितः स्वर्लोकमाह्लादयन्
प्रेम्णा पूरितकण्ठ-गद्गद-हरिध्वानैर्भुवं मोहयन् ।
चञ्चत्-पाद-विहारि-नूपुर-रवैर्नागान्मुदा मीलयन्
नित्यानन्दमहाप्रभुर्विजयते श्रीमल्लवेशोज्ज्वलः ॥ ८ ॥

कृष्णो देवः कलियुगभवं लोकमालोक्य सर्वं
पापासक्तं समजनि कृपासिन्धु-चैतन्यमूर्तिः ।
तस्मिन् येषां न भवति सदा कृष्णबुद्धिर्नराणां
धिक् तान् धिक् तान् धिगिति धिगिति व्याहरेत्किं मृदङ्गः॥

इति श्रीमन्नरहरि-सरकार-ठक्कुर-विरचितं
श्रीशचीनन्दनाष्टकं संपूर्णम् ।

## श्रीगौराङ्गाष्टकम् ।

मलय-सुवासित-भूषित-गात्रं
मूर्ति-मनोहर-विश्व-पवित्रम् ।
पदनख-राजित-लज्जित-चन्द्रे
शुद्ध-कनक-जय-गौर-नमस्ते ॥ १ ॥

स्वगात्र-पुलक-जल-लोचन-पूर्णं
जीव-दयामय-ताप-विदीर्णम् ।
संख्या-जल्पति-नाम-सहस्रे
शुद्ध-कनक-जय-गौर-नमस्ते ॥ २ ॥

हुंकृत-तर्जन-गर्जन-रङ्गे
चञ्चल-कलियुग-पाप-सशंके ।
पद-रज-ताडित दुष्ट-समस्ते
शुद्ध-कनक-जय-गौर-नमस्ते ॥ ३ ॥

सिंह–गमन–जिति–ताण्डव–लीला
दीन–दयामय तारण–शीला ।
अज-भव-वन्दित-पद-नख-चन्द्रे
शुद्ध-कनक–जय–गौर–नमस्ते ॥ ४ ॥

गौरांगावृत–मालती–माले
मेरु–विलम्बित–गङ्गा–धारे ।
मन्द-मधुर-हास-भाष-मुख-चन्द्रे
शुद्ध-कनक–जय–गौर–नमस्ते ॥ ५ ॥

फल्गु–विराजित–चन्दन–भाल
कुंकुम–राजित–देह–विशाल ।
उमापति–सेवित–पद--नख--चन्द्रे
शुद्ध-कनक–जय–गौर–नमस्ते ॥ ६ ॥

भक्ति--पराधीन--शान्तक--वेश
गमन सुनर्तक--भोग–विशेष ।
माला--विराजित--देह--समस्ते
शुद्ध-कनक-जय--गौर--नमस्ते ॥ ७ ॥

भोग–विरक्तिक--संन्यासी--वेश
शिखा–मोचन लोक प्रवेश ।
भक्ति--विरक्तिक प्रवर्तक--चित्त
शुद्ध-कनक--जय--गौर-नमस्ते ॥ ८ ॥

इति श्रीसार्वभौम–भट्टाचार्य–विरचितं श्रीगौराङ्गाष्टकं संपूर्णम् ।

# श्रीशचीतनयाष्टकम् ।

उज्ज्वल–वरण–गौरवर–देहं
　　　　विलसित–निरवधि–भावविदेहम् ।
त्रिभुवन–पावन–कृपाया: लेशं
　　　　तं प्रणमामि च श्रीशचीतनयम् ॥ १ ॥

गद्गद–अन्तर–भावविकारं
　　　　दुर्जन–तर्जन–नाद–विशालम् ।
भवभयभञ्जन–कारण–करुणं
　　　　तं प्रणमामि च श्रीशचीतनयम् ॥ २ ॥

अरुणाम्बरधर–चारुकपोलं
　　　　इन्दु-विनिन्दित-नखचय-रुचिरम् ।
जल्पित–निजगुणनाम–विनोदं
　　　　तं प्रणमामि च श्रीशचीतनयम् ॥ ३ ॥

विगलित–नयन–कमल–जलधारं
　　　　भूषण–नवरस–भावविकारम् ।
गति–अतिमन्थर–नृत्यविलासं
　　　　तं प्रणमामि च श्रीशचीतनयम् ॥ ४ ॥

चञ्चल-चारु-चरण-गति-रुचिरं
　　　　मञ्जीर–रञ्जित–पदयुग–मधुरम् ।
चन्द्र–विनिन्दित–शीतलवदनं
　　　　तं प्रणमामि च श्रीशचीतनयम् ॥ ५ ॥

धृत–कटि–डोर–कमण्डलु–दण्डं
　　　　दिव्य–कलेवर–मुण्डित–मुण्डम् ।

दुर्जन-कल्मष-खण्डन-दण्डं
तं प्रणमामि च श्रीशचीतनयम् ॥ ६ ॥

भूषण-भूरज-अलका-वलितं
कम्पित-बिम्बाधरवर-रुचिरम् ।
मलयज-विरचित-उज्ज्वल-तिलकं
तं प्रणमामि च श्रीशचीतनयम् ॥ ७ ॥

निन्दित अरुण-कमल-दल-नयनं
आजानुलम्बित-श्रीभुज-युगलम् ।
कलेवर-कैशोर-नर्तक-वेशं
तं प्रणमामि च श्रीशचीतनयम् ॥ ८ ॥

इति श्रीशचीतनयाष्टकं संपूर्णम् ।

## श्रीशचीसुताष्टकम् ।

नव गौरवरं नव पुष्पशरं नव भावधरं नवलास्यपरम् ।
नव हास्यकरं नव हेमवरं प्रणमामि शचीसुतगौरवरम् ॥ १ ॥

नव प्रेमयुतं नवनीतशुचं नववेशकृतं नवप्रेमरसम् ।
नवधा विलसत् शुभ प्रेममयं प्रणमामि शचीसुतगौरवरम् ॥ २ ॥

हरिभक्तिपरं हरिनामधरं करजप्यकरं हरिनामपरम् ।
नयने सततं प्रणयाश्रुधरं प्रणमामि शचीसुतगौरवरम् ॥ ३ ॥

सततं जनता-भवतापहरं परमार्थ-परायण-लोकगतिम् ।
नवलेहकरं जगत्तापहरं प्रणमामि शचीसुतगौरवरम् ॥ ४ ॥

निजभक्तिकरं प्रियचारुतरं नटनर्तन नागरराजकुलम् ।
कुलकामिनि-मानसलास्यकरं प्रणमामि शचीसुतगौरवरम् ॥ ५ ॥

करतालवलं कलकण्ठरवं मृदुवाद्यसुवीणिकया मधुरम् ।
निजभक्तिगुणावृत-नाट्यकरं प्रणमामि शचीसुतगौरवरम् ॥ ६ ॥

युगधर्मयुतं पुनर्नन्दसुतं धरणीसुचित्रं भवभावोचितम् ।
तनुध्यानचितं निजवासयुतं प्रणमामि शचीसुतगौरवरम् ॥ ७ ॥

अरुणं नयनं चरणं वसनं वदने स्खलितं स्वकनामधरम् ।
कुरुते सुरसं जगतः जीवनं प्रणमामि शचीसुतगौरवरम् ॥ ८ ॥

इति श्रीशचीसुताष्टकं संपूर्णम् ।

## श्रीमहाप्रभोरष्टकम् ।

स्वरूप ! भवतो भवत्वयमिति स्मितस्निग्धया
गिरैव रघुनाथमुत्पुलकि--गात्रमुल्लासयन् ।
रहस्युपदिशन्निज--प्रणय--गूढ--मुद्रां स्वयं
विराजतु चिराय मे हृदि स गौरचन्द्रः प्रभुः ॥ १ ॥

स्वरूप ! मम हृद्व्रणं बत ! विवेद रूपः कथं
लिलेख यदयं पठ त्वमपि तालपत्रेऽक्षरम् ।
इति प्रणय–वेल्लितं विदधदाशु रूपान्तरं
विराजतु चिराय मे हृदि स गौरचन्द्रः प्रभुः ॥ २ ॥

स्वरूप ! परकीय--सत्--प्रवर-वस्तु--नाशेच्छतां
दधज्जन इह त्वया परिचितो न वेतीक्षयन् ।
सनातनमुदित्य विस्मित--मुखं महाविस्मितं
विराजतु चिराय मे हृदि स गौरचन्द्रः प्रभुः ॥ ३ ॥

स्वरूप ! हरिनाम यज्जगदघोषयं तेन किं
न वाचयितुमप्यथाशकमिमं शिवानन्दजम् ।

करतालवलं कलकण्ठरवं मृदुवाद्यसुवीणिकया मधुरम् ।
निजभक्तिगुणावृत-नाट्यकरं प्रणमामि शचीसुतगौरवरम् ॥ ६ ॥

युगधर्मयुतं पुनर्नन्दसुतं धरणीसुचित्रं भवभावोचितम् ।
तनुध्यानचितं निजवासयुतं प्रणमामि शचीसुतगौरवरम् ॥ ७ ॥

अरुणं नयनं चरणं वसनं वदने स्खलितं स्वकनामधरम् ।
कुरुते सुरसं जगतः जीवनं प्रणमामि शचीसुतगौरवरम् ॥ ८ ॥

इति श्रीशचीसुताष्टकं संपूर्णम् ।

## श्रीमहाप्रभोरष्टकम् ।

स्वरूप! भवतो भवत्वयमिति स्मतस्निग्धया
गिरैव रघुनाथमुत्पुलकि--गात्रमुल्लासयन् ।
रहस्युपदिशन्निज--प्रणय--गूढ--मुद्रां स्वयं
विराजतु चिराय मे हृदि स गौरचन्द्रः प्रभुः ॥ १ ॥

स्वरूप! मम हृद्व्रणं बत! विवेद रूपः कथं
लिलेख यदयं पठ त्वमपि तालपत्रेऽक्षरम् ।
इति प्रणय–वेल्लितं विदधदाशु रूपान्तरं
विराजतु चिराय मे हृदि स गौरचन्द्रः प्रभुः ॥ २ ॥

स्वरूप! परकीय--सत्--प्रवर-वस्तु--नाशेच्छतां
दधज्जन इह त्वया परिचितो न वेतीक्षयन् ।
सनातनमुदित्य विस्मित--मुखं महाविस्मितं
विराजतु चिराय मे हृदि स गौरचन्द्रः प्रभुः ॥ ३ ॥

स्वरूप! हरिनाम यज्जगदघोषयं तेन किं
न वाचयितुमप्यथाशकमिमं शिवानन्दजम् ।

इति स्वपद--लेहनैः शिशुमचीकरत् यः कविं
विराजतु चिराय मे हृदि स गौरचन्द्रः प्रभुः ॥ ४ ॥

स्वरूप ! रसरीतिरम्बुजदृशां व्रजे भण्यतां
घन–प्रणय–मानजा श्रुतियुगं ममोत्कण्ठते ।
रमा यदिह मानिनी तदपि लोकयेति ब्रुवन्
विराजतु चिराय मे हृदि स गौरचन्द्रः प्रभुः ॥ ५ ॥

स्वरूप ! रसमन्दिरं भवसि मन्मुदामास्पदं
त्वमत्र पुरुषोत्तमे व्रजभुवीव मे वर्तसे ।
इति स्वपरिरम्भणैः पुलकिनं व्यधात् तं च यो
विराजतु चिराय मे हृदि स गौरचन्द्रः प्रभुः ॥ ६ ॥

स्वरूप ! किमपीक्षितं क्व नु विभो ! निशि स्वप्नतः
प्रभो ! कथय किन्तु तन्नवयुवा वराम्भोधरः ।
व्यधात् किमयमीक्ष्यते किमु न हीत्यगात् तां दशां
विराजतु चिराय मे हृदि स गौरचन्द्रः प्रभुः ॥ ७ ॥

स्वरूप ! मम नेत्रयोः पुरत एव कृष्णो हस-
न्नपैति न करग्रहं बत ! ददाति हा ! किं सखे ।
इति स्खलति धावति श्वसिति घूर्णते यः सदा
विराजतु चिराय मे हृदि स गौरचन्द्रः प्रभुः ॥ ८ ॥

स्वरूप–चरितामृतं किल महाप्रभोरष्टकं
रहस्यतममद्भुतं पठति यः कृती प्रत्यहम् ।
स्वरूप–परिवारतां नयति तं शचीनन्दनो
घन--प्रणय--माधुरीं स्वपदयोः समास्वादयन् ॥ ९ ॥

इति श्रीमद्विश्वनाथ-चक्रवर्ति-ठक्कुर-विरचित-स्तवामृतलहर्यां
श्रीमहाप्रभोरष्टकं संपूर्णम् ।

# श्रीशचीनन्दनविजयाष्टकम् ।

गदाधर ! यदा परः स किल कश्चनालोकितो
मया श्रित-गयाध्वना मधुर-मूर्तिरेकस्तदा ।
नवाम्बुद इव ब्रुवन् धृतनवाम्बुदो नेत्रयो-
र्लुठन् भुवि निरुद्धवाग्विजयते शचीनन्दनः ॥ १ ॥

अलक्षितचरीं हरीत्युदितमात्रतः किं दशा-
मसावति-बुधाग्रणीरतुल-कम्प-सम्पादिकाम् ।
व्रजन्नहह ! मोदते न पुनरत्र शास्त्रेष्विति
स्वशिष्यगण-वेष्टितो विजयते शचीनन्दनः ॥ २ ॥

हाहा ! किमिदमुच्यते पठ पठात्र कृष्णं मुहु-
र्विना तमिह साधुतां दधति किं बुधा ! धातवः ।
प्रसिद्ध इह वर्ण-सङ्घटित-सम्यगाम्नायकः
स्वनाम्नि यदिति ब्रुवन् विजयते शचीनन्दनः ॥ ३ ॥

नवाम्बुज-दले यदीक्षण-सवर्णता-दीर्घते
सदा स्वहृदि भाव्यतां सपदि साध्यतां तत्पदम् ।
स पाठयति विस्मितान् स्मितमुखः स्वशिष्यानिति
प्रतिप्रकरणं प्रभुर्विजयते शचीनन्दनः ॥ ४ ॥

क्व यानि करवाणि किं क्व नु मया हरिर्लभ्यतां
तमद्दिशतु कः सखे ! कथय कः प्रपद्येत माम् ।
इति द्रवति घूर्णते कलित-भक्तकण्ठः शुचा
समूर्च्छयति मातरं विजयते शचीनन्दनः ॥ ५ ॥

स्मरार्बुद-दुरापया तनुरुचिच्छटाच्छायया
तमः कलितमः-कृतं निखिलमेव निर्मूलयन् ।

नृणां नयन-सौभगं दिविषदां मुखैस्तारयन्
लसन्नधिधरः प्रभुर्विजयते शचीनन्दनः ॥ ६ ॥

अयं कनक-भूधरः प्रणय-रत्नमुच्चैः किरन्
कृपातुरतया-व्रजन्नभवदत्र विश्वम्भरः ।
यदक्षि-पथ-सञ्चरत्-सुरधुनी-प्रवाहैर्निजं
परं च जगदार्द्रयन् विजयते शचीनन्दनः ॥ ७ ॥

गतोऽस्मि मथुरां मम प्रियतमा विशाखा सखी
गता नु बत ! किं दशां वद कथं नु वेदानि ताम् ।
इतीव स निजेच्छया व्रजपतेः सुतः प्रापित-
स्तदीय-रसचर्वणां विजयते शचीनन्दनः ॥ ८ ॥

इदं पठति योऽष्टकं गुणनिधे ! शचीनन्दन !
प्रभो ! तव पदाम्बुजे स्फुरदमन्द-विश्रम्भवान् ।
तमुज्ज्वल मतिं निज-प्रणयरूप-वर्गानुगं
विधाय निजधामनि द्रुतमुरीकुरुष्व स्वयम् ॥ ९ ॥

इति श्रीमद्विश्वनाथ-चक्रवर्ति-ठक्कुर-विरचित-स्तवामृतलहर्यां
श्रीशचीनन्दनविजयाष्टकं संपूर्णम् ।

## श्रीमन्महाप्रभोरष्टकालीय-लीला-स्मरणमंगल-स्तोत्रम् (१) ।

### ( लीलामाहात्म्यम् )

श्रीगौरांगमहाप्रभोश्चरणयोर्या केश-शेषादिभिः
सेवागम्यतया स्वभक्तविहिता सान्यैर्यया लभ्यते ।
तां तन्मानसिकीं स्मृतिं प्रथयितुं भाव्यां सदा सत्तमै-
र्नौमि प्रात्यहिकं तदीयचरितं श्रीमन्नवद्वीपजम् ॥ १ ॥

## ( संक्षिप्त लीलासूत्रम् )

रात्र्यन्ते शयनोत्थितः सुरसरित्स्नातो बभौ यः प्रगे
पूर्वाह्णे स्वगणैर्लसत्युपवने तैर्भाति मध्याह्नके ।
यः पुर्यामपराह्णके निजगृहे सायं गृहेऽङ्गने
श्रीवासस्य निशामुखे निशि वसन् गौरः स नो रक्षतु ॥ २ ॥

## ( निशान्तलीला )

प्रगे श्रीवासस्य द्विजकुलरवैर्निष्कुटवरे
श्रुति-ध्वान-प्रख्यैः सपदि गतनिद्रं पुलकितम् ।
हरेः पार्श्वे राधास्थितिमनुभवन्तं नयनजै-
र्जलैः संसिक्तांगं वरकनकगौरं भज मनः ॥ ३ ॥

## ( प्रातर्लीला )

प्रभाते प्रक्षाल्य स्ववदनविधुं केशव-कथां
गृहालिन्दे प्रेमाकुलित-हृदयं यः प्रियजनैः ।
ब्रुवन्नास्ते राधारस-कलन-फुल्लो वरतनु-
र्भज त्वं तं गौरं निरवधि मनः प्रेम-वलितम् ॥ ४ ॥

## ( पूर्वाह्णलीला )

हरि-वनगति-लीलां व्याकुलीभूत-गोष्ठां
स्मृतिविषय-गतां यः कारयामास साक्षात् ।
तदनुकरणकारी भक्तवृन्दस्य मध्ये
तमहमनुभजामि श्रील-गौरांगचन्द्रम् ॥ ५ ॥

## ( मध्याह्नलीला )

सहालि-श्रीराधा-सहित-हरिलीलां बहुविधां
स्मरन् मध्याह्नीयां पुलकित-तनुर्गद्गदवचाः ।

ब्रुवन् व्यक्तं तां च स्वजनगण-मध्येऽनुकुरुते
शचीसूनुर्यस्तं भज मम मनस्त्वं बत सदा ॥ ६ ॥

( अपराह्णलीला )

परावृत्तिं गोष्ठे व्रजनृपतिसूनोर्विपिनतो
महानन्दांभोधेः सपदि जनयित्रीं स्वहृदये ।
स्मरन् श्रीगौरांगो नटति वलते निःश्वसिति च
क्षणं मुह्यन् सर्वान् विवशयति यस्तं भज मनः ॥ ७ ॥

( सायंलीला )

सायन्तनीं कृष्ण-मनोज्ञ-लीलां
स्नानाशनाद्यां हि मुहुर्विचिन्त्य ।
स्वभक्त-मध्येऽनुकरोति नित्यं
तां यो मनस्त्वं भज गौरचन्द्रम् ॥ ८ ॥

( प्रदोषलीला )

समुत्कंठासन्नाकलित-हरिवार्ता बत यथा-
भिसृत्यासौ राधा हरिमपि निकुंजे गतवती ।
तथात्मानं मत्वा कटिनिहित-पाणिर्विशति च
स्खलन् गच्छन् गौरो नटति धृत-कंपाश्रुपुलकः ॥ ९ ॥

( निशालीला )

श्रीश्रीवासगृहे मुदा परिवृतो भक्तैः स्वनामावलीं
गायद्भिर्गलदश्रुकंपपुलको गौरो नटित्वा प्रभुः ।
पुष्पारामगते सुरत्न-शयने ज्योत्स्ना-युतायां निशि
विश्रान्तः स शचीसुतः कृतफलाहारो निषेव्यो मम ॥१०॥

इति श्रीमद्रूपगोस्वामि-कृतं-श्रीमन्महाप्रभोरष्टकालीय-लीला-
स्मरणमंगल-स्तोत्रं (१) संपूर्णम् ।

# श्रीमन्महाप्रभोरष्टकालीय-लीला-स्मरणमंगल-स्तोत्रम् (२) ।

## ( लीलामाहात्म्यम् )

श्रीगौराङ्गमहाप्रभोश्चरणयोर्या केश–शेषादिभिः
सेवागम्यतया स्वभक्तविहिता सान्यैर्यया लभ्यते ।
तां तन्मानसिकीं स्मृतिं प्रथयितुं भाव्यां सदा सत्तमै–
र्नौमि प्रात्यहिकं तदीयचरितं श्रीमन्नवद्वीपजम् ॥ १ ॥

## ( संक्षिप्त लीलासूत्रम् )

रात्र्यन्ते शयनोत्थितः सुरसरित्स्नातो बभौ यः प्रगे
पूर्वाह्णे स्वगणैर्लसत्युपवने तैर्भाति मध्याह्नके ।
यः पुर्यामपराह्णके निजगृहे सायं गृहेऽङ्गने
श्रीवासस्य निशामुखे निशि वसन् गौरः स नो रक्षतु ॥ २ ॥

## ( निशान्तलीला )

रात्र्यन्ते पिककुक्कुटादिनिनदं श्रुत्वा स्वतल्पोत्थितः
श्रीविष्णुप्रियया समं रसकथां संभाष्य सन्तोष्य ताम् ।
गत्वान्यत्र धरासनोपरि वसन् सद्भिः सुधौताननो
यो मात्रादिभिरीक्षितोऽतिमुदितस्तं गौरमध्येम्यहम् ॥ ३ ॥

## ( प्रातर्लीला )

प्रातः स्वः सरिति स्वपार्षदवृतः स्नात्वा प्रसूनादिभि–
स्तां संपूज्य गृहीतचारुवसनः स्रक्चन्दनालंकृतः ।
कृत्वा विष्णुसमर्चनादि सगणो भुक्त्वान्नमाचम्य च
द्वित्रं चान्यगृहे सुखं स्वपिति यस्तं गौरमध्येम्यहम् ॥ ४ ॥

## ( पूर्वाह्णलीला )

पूर्वाह्णे शयनोत्थितः सुपयसा प्रक्षाल्य वक्त्राम्बुजं
भक्तैः श्रीहरिनामकीर्तनपरैः सांगं स्वयं कीर्तयन् ।
भक्तानां भवनेऽपि च स्वभवने क्रीडन्नृणां वर्धय-
त्यानन्दं पुरवासिनां य उरुधा तं गौरमध्येम्यहम् ॥ ५ ॥

## ( मध्याह्णलीला )

मध्याह्णे सह तैः स्वपार्षदगणैः संकीर्तनादीदृशं
साद्वैतेन्दुगदाधरः किल सहश्रीलावधूतप्रभुः ।
आरामे मृदुमारुतैः शिशिरितैर्भृङ्गद्विजैर्नादिते
स्वं वृन्दाविपिनं स्मरन् भ्रमति यस्तं गौरमध्येम्यहम् ॥ ६ ॥

## ( अपराह्णलीला )

यः श्रीमानपराह्णके सहगणैस्तैस्तादृशैः प्रेमवां-
स्तादृक्ष् स्वयमप्यलं त्रिजगतां शर्माणि विस्तारयन् ।
आरामात्तत एति पौरजनताचक्षुश्चकोरोडुपो
मात्रा दूरमुदेक्षितो निजगृहं तं गौरमध्येम्यहम् ॥ ७ ॥

## ( सायंलीला )

यस्त्रिस्रोतसि सायमाप्तनिवहैः स्नात्वा प्रदीपालिभिः
पुष्पाद्यैश्च समर्चितः कलित-सत्पट्टाम्बरः स्रग्धरः ।
विष्णोस्तत्समयार्चनं च कृतवान् दीपालिभिस्तैः समं
भुक्त्वान्नानि सुवीटिकामपि तथा तं गौरमध्येम्यहम् ॥ ८ ॥

## ( प्रदोषलीला )

यः श्रीवासगृहे प्रदोषसमये ह्यद्वैतचन्द्रादिभिः
सर्वैर्भक्तगणैः समं हरिकथा-पीयूषमास्वादयन् ।

प्रेमानन्दसमाकुलश्च चलधीः संकीर्तने लम्पटः
कर्तुं कीर्तनमूर्ध्वमुद्यमपरस्तं गौरमध्येम्यहम् ॥ ९ ॥

## ( निशालीला )

श्रीवासादिभिरावृतो निजगणैः सार्धं प्रभुभ्यां नट-
न्नुच्चैस्ताल-मृदङ्गवादनपरैर्गायद्भिरुल्लासयन् ।
श्रीमान् श्रीलगदाधरेण सहितो नक्तं विभात्यद्भुतं
स्वं गौरः शयनालये स्वपिति यस्तं गौरमध्येम्यहम् ॥ १०॥

## ( फलश्रुतिः )

श्रीगौराङ्गविधोः स्वधामनि नवद्वीपेऽष्टकालोद्भवां
भाव्यां भव्यजनेन गोकुलविधोर्लीलास्मृतेरादितः ।
लीलां द्योतयदेतदत्र दशकं प्रीत्यन्वितो यः पठेत्
तं प्रीणाति सदैव यः करुणया तं गौरमध्येम्यहम् ॥ ११॥

इति श्रीमद्विश्वनाथ-चक्रवर्ति-ठक्कुर-विरचितं श्रीमन्महाप्रभोरष्टकालीय-लीला-स्मरणमङ्गल-स्तोत्रं (२) समाप्तम् ।

# श्रीकृष्णचैतन्यनामस्तोत्रम् (१) ।

श्रीगौरांगश्चिदानन्दः कृष्णश्चैतन्यविग्रहः ।
नवद्वीप-निवासी च जगन्नाथसुतस्तथा ॥ १ ॥

पूर्णोत्तमः परंब्रह्म संन्यासि-रूपधारकः ।
विश्वंभरो दीनबन्धुर्हरिनाम-प्रदायकः ॥ २ ॥

एतद्द्वादशनामानि सकृदेव पठेन्नरः ।
प्रेमभक्तिर्भवेत् तस्य श्रीगौरांगप्रसादतः ॥ ३ ॥

सुवर्णवर्णो हेमाङ्गो गौराङ्गः शचीनन्दनः ।
अभ्यन्तरे श्यामवर्णो वन्दे तस्य पदांबुजम् ॥ ४ ॥

इति श्रीकृष्णचैतन्यनामस्तोत्रं (१) संपूर्णम् ।

## श्रीकृष्णचैतन्यनामस्तोत्रम् (२) ।

चैतन्यः कृष्णचैतन्यो गौरांगो द्विजनायकः ।
यतीनां दण्डिनां चैव न्यासिनां च शिरोमणिः ॥ १ ॥

रक्ताम्बरधरः श्रीमान् नवदीपसुधाकरः ।
प्रेमभक्तिप्रदश्चैव श्रीशचीनन्दनस्तथा ॥ २ ॥

द्वादशैतानि नामानि त्रिसन्ध्यं यः पठेन्नरः ।
तस्य वाञ्छा-सुसिद्धिः स्यात् भक्तिः श्रीलपदाम्बुजे ॥ ३ ॥

इति श्रीसार्वभौम-भट्टाचार्य-विरचितं
श्रीकृष्णचैतन्यनामस्तोत्रं (२) संपूर्णम् ।

## श्रीगौरांगस्तोत्रम् ।

श्रीराधिकारूपगुणोर्मिचौरः प्रतप्तकार्तस्वरकान्तगौरः ।
वेदान्तवेदांग–पुराणसारः जीयात् स गौरः करुणावतारः ॥ १ ॥

ब्रह्मेन्द्ररुद्रस्तुतपादपद्मः औदार्य--माधुर्यगुणाब्धिसद्मः ।
रोमांच–कंपाश्रुप्रमोदभारः जीयात् स गौरः करुणावतारः ॥ २ ॥

स्वरूपरूपादिक–प्राणनाथः　गोपाल–गोविन्दमुकुन्दनाथः ।
दरिद्रदुर्जात्यघदुःखदारः जीयात् स गौरः करुणावतारः ॥ ३ ॥

मायामतध्वान्तनिकारहारी　वाराणसी–न्यासिसमूहतारी ।
विशुद्धसद्भक्तिप्रसारकारी जीयात् स गौरः करुणावतारी ॥ ४ ॥

श्रीदिग्विजेतृद्विजदर्पहारी　श्रीसार्वभौमातिप्रसादकारी ।
अष्टादशाब्देशपुरीविहारी जीयात् स गौरः करुणावतारी ॥ ५ ॥

महोज्ज्वलप्रेमरसप्रदाता　श्रीनामसर्वोत्तमभक्तिधाता ।
गोलोकवृन्दावन–सद्विहारः जीयात् स गौरः करुणावतारः ॥ ६ ॥

सदा हरेकृष्णसुगानमत्तः　योगीन्द्रमौनीन्द्रसमाधिवित्तः ।
दत्तव्रजप्रेमसुधासुसारः　जीयात् स गौरः करुणावतारः ॥ ७ ॥

कवाटवक्षोनवपद्मनेत्रः　श्रीसच्चिदानन्दघनासुगात्रः ।
स्वांगप्रभानिन्दितकोटिमारः जीयात् स गौरः करुणावतारः ॥ ८ ॥

नीलाद्रि–शुभ्रांशु–सुधाचकोरः　रथाग्रसंगीतसुधाविधूरः ।
श्रीवैष्णवव्रातलसच्छरीरः जीयात् स गौरः करुणावतारः ॥ ९ ॥

भक्तावलीमानसराजहंसः　संन्यासिभूदेवकुलावतंसः ।
श्रीमज्जगन्नाथशचीकुमारः जीयात् स गौरः करुणावतारः ॥ १०॥

गौरस्तुतिं गायति भक्तिपूर्वं प्राप्नोति सुप्रेमसुधां सः सर्वम् ।
त्रितापदावानल–दुःखमुक्तः　प्रमोदते　कृष्णपदाब्जभक्तः ॥ ११॥

इति त्रिदण्डिपाद-श्रीभक्तिदेशिक-आचार्यमहाराज-विरचितं
श्रीगौराँगस्तोत्रं समाप्तम् ।